मणिमुक्तासुवर्णानि तत्रानिन्युः सहस्रशः । ततः प्रावर्त्तत द्यूतं तेषां तद्रतिनाशनं ।
कलहायासदं घोरं दुर्म्मतीनां चयावहं । निष्काणान्तु सहस्राणि सुवर्णस्य दशादितः ।
रुक्मिणा सह सम्पाते बलदेवो ग्लहं ददौ । तं जिगाय ततो रुक्मी यतमानं महाबलं । ९०२५
तावदेवापरं भूयो बलदेवं जिगाय सः । अपकृष्यमाणस्तु रुक्मिणा केशवाग्रजः ।
सुवर्णकोटीर्जयाह ग्लहे तस्य महाबलः । जितमित्येव हृष्टोऽथ तमाहूतिरभाषत ।
श्लाघमानस्य चिक्षेप प्रहसन्मुसलायुधं । अविद्यो दुर्व्बलः श्रीमान् हिरण्यमभितं मया ।
अजेयो बलदेवोऽयमद्यद्यूते पराजितः । कालिङ्गराजस्तच्छ्रुत्वा प्रजहास भृशं तदा ।
दन्तान् प्रदर्शयन् हृष्टस्तत्राक्रुध्यद्धलायुधः । रुक्मिणस्तद्वचः श्रुत्वा पराजयनिमित्तजं । ९०३०
निगृह्यमानस्तीक्ष्णाभिर्व्वाग्भिर्भीष्मकसूनुना । रोषमहारयामास जितरोषोऽपि धर्म्मवित् ।
संक्रुद्धो धर्षणां प्राप्य रौहिणेयो महाबलः । धैर्य्यात्मनः संनियम्य ततो वचनमब्रवीत् ।
दशकोटिसहस्राणि ग्लह एको ममापरः । एतं संपरिगृह्णीष्व पातयाक्षान्नराधिप ।
कृष्णाक्षान् लोहिताक्षांश्च देशेऽस्मिंस्त्वधिपांशुले । इत्येवमाकर्षयामास रुक्मिणं रोहिणीसुतः ।
अनुक्त्वा वचनं किञ्चिद्दाढमित्यब्रवीत् पुनः । अक्षान् रुक्मी तदा हृष्टः पातयामास पार्थिवः । ९०३५
चातुरक्षे तु निर्वृत्ते निर्ज्जितः स नराधिपः । बलदेवेन धर्म्मेण नेत्युवाच ततो बलं ।
धैर्य्यात्मनः संनियम्य न स किञ्चिदुवाच ह । बलदेवं ततो रुक्मी मया जितमिति स्मयन् ।
बलदेवस्तु तच्छ्रुत्वा जिह्मवाक्यं नराधिपात् । भूयः क्रोधसमाविष्टो नोत्तरं व्याजहार ह ।
ततो गम्भीरनिर्घोषा वागुवाचाशरीरिणी । बलदेवस्य तं क्रोधं वर्द्धयन्ती महात्मनः ।
सत्यमाह बलः श्रीमान्धर्म्मेणैष पराजितः । अनुक्त्वाऽपि ततः किञ्चित् प्राप्तो भवति कर्म्मणा । ९०४०
मनसा समनुज्ञातं तत् स्यादित्यवगम्यतां । इति श्रुत्वा वचः सत्यमन्तरीक्षात् सुभाषितं ।
सङ्कर्षणस्तदोत्थाय सौवर्णेनोरुणा बली । जघानाष्टापदेनैव प्रमथ्य यदुपुङ्गवः ।
रुक्मिण्या भ्रातरं ज्येष्ठं निष्पिपेष महीतले । विवादे कुपितो रामः चेत्तारं क्रूरभाषिणं ।
ततोऽपहृत्य संक्रुद्धः कलिङ्गाधिपतेरपि । दन्तान् बभञ्ज संरम्भात् प्रोन्ननाद च सिंहवत् ।
खड्गमुद्यम्य तांश्चापि त्रासयामास पार्थिवान् । स्तम्भं सभायाः सौवर्णमुत्पाट्य बलिनाम्बरः । ९०४५
गजेन्द्र इव तं स्तम्भं कर्षन् सङ्कर्षणस्ततः । निर्ज्जगाम सभाद्वारात्त्रासयन् क्रथकैशिकान् ।
रुक्मिणं निहतप्रज्ञं स हत्वा यादवर्षभः । वित्रास्य द्विषतः सर्व्वान् सिंहः क्षुद्रमृगानिव ।
जगाम शिबिरं रामः स्वमेव स्वजनावृतः । न्यवेदयत कृष्णाय तच्च सर्व्वं यथाऽभवत् ।
नोवाच स तदा किञ्चित् कृष्णो रामं महाद्युतिः । रुक्मिणी च ततः श्रुत्वा निहतं भ्रातरं प्रियं ।
निगृह्य च तदात्मानं क्रोधादश्रूण्यवर्त्तयत् । न हतो वासुदेवेन यः पूर्व्वं परवीरहा । ९०५०
स रामकरमुक्तेन निहतो द्यूतमण्डले । अष्टापदेन बलवान्राजा वज्रधरोपमः ।
तस्मिन् हते महावीर्य्ये नृपतौ भीष्मकात्मजे । द्रुमभार्गवतुल्ये वै द्रुमभार्गवशिक्षिते ।

हतौ च युद्धकुशले नित्ययाजिनि पातिते । वृष्णयश्चान्धकाश्चैव सर्व्वे विमनसोऽभवन् ।
एतत्ते सर्व्वमाख्यातं रुक्मिणो निधनं मया । वैरस्य च समुत्थानं वृष्णिभिर्भरतर्षभ ।
वृष्णयोऽपि महाराज धनान्यादाय सर्व्वशः । रामकृष्णौ समाश्रित्य ययुर्द्वारवतीं पुरीं । १०६५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि रुक्मिवधे ऊनविंशत्यधिकशततोऽध्यायः ॥ ११९ ॥
॥ जनमेजय उवाच ॥ भूय एव तु विप्रर्षे बलदेवस्य धीमतः । माहात्म्यं श्रोतुमिच्छामि शेषस्य धरणीधृतः ।
अतीव बलदेवन्तं तेजोराशिमनिर्ज्जितं । कथयन्ति महात्मानो ये पुराणविदो जनाः ।
तस्य कर्म्माण्यहं विप्र श्रोतुमिच्छामि तत्त्वतः । अनन्तं यं विदुर्नागमादिदेवं महौजसं ।
॥ वैशम्पायन उवाच ॥ पुराणे नागराजोऽसौ कथ्यते धरणीधरः । शेषस्तेजोनिधिः श्रीमानकम्प्यः पुरुषोत्तमः ।
योगाचार्य्यो महावीर्य्यो वेदमन्त्रमुखो बली । जरासन्धं गदायुद्धे जितवान् यो न चावधीत् । १०७०
बहवश्चैव राजानः पृथिव्यां पृथिवीपते । अन्वयुर्म्मागधं सर्व्वे ते चापि विजिता रणे ।
नागायुतबलप्राणो भीमो भीमपराक्रमः । असकृद्बलदेवेन बाहुयुद्धे विनिर्ज्जितः ।
दुर्य्योधनस्य कन्यान्तु हरमाणो न्यगृह्यत । शाम्बो जाम्बवतीपुत्त्रो नगरे नागसाह्वये ।
राजभिः सर्व्वतो रुद्धो हरमाणो बलात् किल । तमुपश्रुत्य संरुद्धमाजगाम हलायुधः ।
रामस्तस्य तु मोक्षार्थमागतो नालभच्च तं । ततश्चुक्रोध बलवानद्भुतञ्चाकरोन्महत् । १०७५
अनिवार्य्यमभेद्यञ्च दिव्यमप्रतिमं बली । लाङ्गलास्त्रं समुद्यम्य ब्रह्मदण्डाभिमन्त्रितं ।
प्राकारवप्रे विन्यस्य पुरस्य स महाद्युतिः । प्रक्षेप्तुमैच्छद्गङ्गायां नगरं कौरवस्य तत् ।
तदा घूर्णितमालक्ष्य पुरं दुर्य्योधनो नृपः । शाम्बं निर्यातयामास सभार्य्यं तस्य धीमतः ।
ददौ शिष्यं तदात्मानं रामस्य सुमहात्मनः । गदायुद्धे कुरुपतिं शिष्यं जग्राह तञ्च सः ।
ततः प्रभृति राजेन्द्र पुरमेतद्विघूर्णितं । आवर्ज्जितमिवाभाति गङ्गामभिमुखं नृप । १०८०
इदमित्यद्भुतं कर्म्म रामस्य प्रथितं भुवि । भाण्डीरे कथ्यते राजन् यत् कृतं शौरिणा पुरा ।
प्रलम्बं मुष्टिनैकेन यज्जघान हलायुधः । धेनुकञ्च महाकायं चिक्षेप नगमूर्द्धनि ।
स गतासुः पपातोर्व्व्यां दैत्यो गर्द्दभरूपधृक् ।
लवणजलगमा महानदी द्रुतजलवेगतरङ्गगामिनी । नगरमभिमुखी यदा कृता हलविधृता यमुना यमस्वसा ।
बलदेवस्य माहात्म्यमेतत्ते कथितं मया । अनन्तस्याप्रमेयस्य शेषस्य सुमहात्मनः । १०८५
इति पुरुषवरस्य सीरिणो बहुविधमुक्तममन्यदेव च । यदकथितमिहाद्य कर्म्म ते तदुपलभस्व पुराणविस्तरात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बलदेवमाहात्म्यकथने विंशत्यधिकशततोऽध्यायः ॥ १२० ॥
॥ जनमेजय उवाच ॥ प्रत्येत्य द्वारकां विष्णुर्हते रुक्मिणि वीर्य्यवान् । अकरोद्यन्महाबाहुस्तन्मे वद महामुने ।
॥ वैशम्पायन उवाच ॥ स तैर्वृतः पुरीं गत्वा सर्व्वैर्यादवनन्दनः । द्वारकां भगवान् कृष्णः प्रत्यवैक्षत वीर्य्यवान् ।
प्रत्यपद्यत रत्नानि विविधानि बहूनि च । यथार्हं पुण्डरीकाक्षो नैर्ऋतान् प्रत्यवारयत् ।
तत्र विघ्नं चरन्ति स्म दैतेयाः सह दानवैः । तान् जघान महाबाहुर्व्वरदत्तान्महासुरान् । १०९०

विघ्नञ्चाप्याकरोत्तत्र नरको नाम दानवः । त्रासनः सुरसंघानां देवराजरिपुर्म्महान् ।
स भौमो मूर्त्तिलिङ्गस्थः सर्व्वदेवाभिबाधिता । मानुषाणामृषीणाञ्च प्रतीपमकरोत्तदा ।
त्वष्टुर्दुहितरं भौमः कशेरुमगमत्तदा । गजरूपेण जग्राह रुचिराङ्गीं चतुर्द्दशीं ।
प्रमथ्य तां वरारोहां नरको वाक्यमब्रवीत् । नष्टशोकभयो मोहात् प्राग्ज्योतिषपतिस्तदा ।
यानि देवमनुष्येषु रत्नानि विविधानि च । बिभर्त्ति च मही कृत्स्ना सागरेषु च यद्वसु । ६७९५
अद्यप्रभृति तानीह सहिताः सर्व्वनैर्ऋताः । ममैवोपाहरिष्यन्ति दैत्याश्च सह दानवैः ।
एवमुक्त्वा तु वस्त्राणि रत्नानि विविधानि च । सञ्जहार तदा भौमस्तच्च नाधिचकार सः ।
गन्धर्व्वाणाञ्च याः कन्या जहार नरको बली । याश्च देवमनुष्याणां सप्त चाप्सरसां गणाः ।
चतुर्द्दशसहस्राणि सैकविंशच्छतानि च । एकवेणीधराः सर्व्वाः सतां मार्गमनुव्रताः ।
तासां पुरवरं भौमोऽकारयन्मणिपर्व्वतं । अलकायामदीनात्मामुरोः स्वविषयं प्रति । ६८००
ताश्च प्राग्ज्योतिषपतिं मुरोश्चैव दशात्मजाः । नैर्ऋताश्च यथा मुख्याः पालयन्त उपासते ।
स एष तमसः पारे वरदत्तो महासुरः । न चासुरगणैः सर्व्वैः सहितैः कर्म्म तत् पुरा ।
कृतपूर्व्वं महाघोरं यदकार्षीन्महासुरः । अदितिं धर्षयामास कुण्डलार्थे महासुरः ।
यं मही सुषुवे देवी यस्य प्राग्ज्योतिषं पुरं । द्वारपालाश्च चत्वारस्तस्यासन् युद्धदुर्म्मदाः ।
हयग्रीवो निसुन्दश्च वीरः पञ्चनदस्तथा । मुरुः पुत्त्रसहस्रैश्च वरदत्तोऽसुरो महान् । ६८०५
आदेवयानमावृत्य पन्थानं समुपस्थिताः । वित्रासनाः सुकृतिनां विरूपैराक्षसैः सह ।
तद्बाधार्थं महाबाहुः शङ्खचक्रगदासिभृत् । जातो वृष्णिषु देवक्यां वसुदेवाज्जनार्द्दनः ।
तस्याथ पुरुषेन्द्रस्य लोके प्रथिततेजसः । निवासो द्वारकादेवैरुपायादुपपादिता ।
अतीव हि पुरी रम्या द्वारका वासवक्षयात् । महार्णवपरिक्षिप्ता पञ्चपर्व्वतशोभिता ।
तस्यां देवपुराभायां सभा काञ्चनतोरणा । सा दाशार्हीति विख्याता योजनायामविस्तृता । ६८१०
तत्र वृष्ण्यन्धकाः सर्व्वे रामकृष्णपुरोगमाः । लोकयात्रामिमां कृत्स्नां परिरक्षन्त आसते ।
तत्रासीनेषु सर्व्वेषु कदाचिद्भरतर्षभ । दिव्यगन्धो ववौ वायुः पुष्पवर्षं पपात च ।
ततः किलकिलाशब्दः प्रभाजालाभिसंवृतः । मुहूर्त्तमन्तरीक्षेऽभूत्ततो भूमौ प्रतिष्ठितः ।
मध्ये तु तेजसस्तस्य पाण्डरं गजमास्थितः । वृतो देवगणैः सर्व्वैर्वासवः प्रत्यदृश्यत ।
रामकृष्णौ च राजा च वृष्ण्यन्धकगणैः सह । प्रत्युद्ययुर्म्महात्मानं पूजयन्तः सुरेश्वरं । ६८१५
सोऽवतीर्य्य गजात्तूर्णं परिष्वज्य जनार्द्दनं । सस्वजे बलदेवञ्च तञ्च राजानमाहुकं ।
वृष्णीनन्यान् सस्वजे च यथाकालं यथावयः । पूजितो रामकृष्णाभ्यामाविवेश सभां शुभां ।
तत्रासीनोऽभ्यलङ्कृत्य सभान्तां स सुरेश्वरः । अर्घ्यादिसमुदाचारं प्रत्यगृह्णाद्यथाविधि ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नरकवधे एकविंशत्यधिकशततोऽध्यायः ॥ १२१ ॥
॥ वैशम्पायन उवाच ॥ अथोवाच महातेजा वासवो वासवानुजं । सान्त्वपूर्व्वं करेणास्य संस्पृश्य वदनं शुभं ।

देवकीनन्दन वचः शृणु मे मधुसूदन । येन त्वाऽभिगतोऽद्याहं कार्य्येणामित्रकर्षण । ६८२०
नैर्ऋतो नरको नाम ब्रह्मणो वरदर्पितः । अदित्याः कुण्डले मोहाज्जहार दितिनन्दनः ।
देवानां विप्रिये नित्यमृषीणाञ्च स वर्त्तते । तव चैवान्तरप्रेप्सो जहि तं पापपूरुषं ।
अयं त्वां गरुडस्तत्र प्रापयिष्यति कामगः । कामवीर्य्योऽतितेजस्वी वैनतेयोऽन्तरीक्षगः ।
अवध्यः सर्व्वभूतानां भौमः स नरकोऽसुरः । निसूदयित्वा तं पापं क्षिप्रमागन्तुमर्हसि ।
इत्युक्तः पुण्डरीकाक्षो देवराजेन केशवः । प्रतिजज्ञे महाबाहुर्नरकस्य निवर्हणं । ६८२५
ततः सहैव शक्रेण शङ्खचक्रगदासिधृत् । प्रतस्थे गरुडेनाथ सत्यभामासहायवान् ।
क्रमेण सप्तस्कन्धान् स मारुतानां स वासवः । पश्यतां यदुसिंहानामूर्द्ध्वमाचक्रमे बली ।
वारणेन्द्रगतः शक्रो गरुडस्थो जनार्द्दनः । प्रकाशेते ऽविदूरत्वात् सूर्य्याचन्द्रमसाविव ।
अथान्तरीक्षे गन्धर्व्वैरप्सरोभिश्च केशवः । स्तूयमानोऽथ शक्रस्य क्रमेणान्तरधीयत ।
समाधायेतिकर्त्तव्यं वासवो विबुधाधिपः । स्वमेव भवनं प्रायात् कृष्णः प्राग्ज्योतिषं प्रति । ६८३०
पक्षानिलहतो वायुः प्रतिलोमं ववौ तदा । ततो भीमरवैर्मेघैर्व्व्यभ्रमुर्गगणेचराः ।
क्षणेन समनुप्राप्तो दिवमाकाशगेन वै । दूरादेव च तान्दृष्ट्वा प्रययौ यत्र ते स्थिताः ।
अपश्यत् पर्व्वतद्वारि हस्त्यश्वरथवाहनं । क्षुरान्तान् मौरवान् पाशान् षट्सहस्रान्ददर्श सः ।
॥ वैशम्पायन उवाच ॥ गरुडस्योपरि श्रीमान् शङ्खचक्रगदासिधृत् । विभ्रन्नीलाम्बुदाकारं पीतवासाश्चतुर्भुजः ।
वनमालाकुलोरस्कः श्रीवत्सेन्दुनिभोरसः । किरीटमूर्द्धा सूर्य्याभः सविद्युदिव चन्द्रमाः । ६८३५
व्याविकूजमहाशब्दः श्रूयतेऽशनिनिस्वनः । ज्ञात्वा च दानवः सर्व्वं स्वयं विष्णुरिहागतः ।
क्रोधाद्रुधिररक्ताक्षो मुरुः कालान्तकप्रभः । अभ्यधावत वेगेन शक्तिं गृह्य महासुरः ।
चिक्षेप स महाशक्तिं वज्रकाञ्चनभूषितां । तामापतन्तीं शक्तिं स महोल्कां ज्वलितामिव ।
समाधत्त शरञ्चैकं रुक्मपुङ्खं जनार्द्दनः । द्विधाऽच्छिनत् क्षुरप्रेण वासुदेवः स वीर्य्यवान् ।
शक्तिं चिच्छेद तत्राशौ विद्युत्पुञ्ज इव ज्वलन् । पुनस्तु क्रोधरक्ताक्षो मुरुर्गृह्य महागदां । ६८४०
इन्द्राशनिरिवेन्द्रेण विसृष्ट इव निस्वनः । आकर्णपूर्णञ्चिक्षेप अर्द्धचन्द्रं सुरोत्तमः ।
मध्यदेशे तु चिच्छेद गदां तां रुक्मभूषितां । पुनश्चिच्छेद भल्लेन दानवस्य शिरो रणे ।
संच्छिद्य पाशान् सर्व्वांस्तान्मुरं हत्वा सबान्धवं । सोऽग्र्यावशेगणान् हत्वा नरकस्य महाबलान् ।
शिलासंघानतिक्रम्य भगवान् देवकीसुतः । अपश्यद्दानवं सैन्यं निसुन्दञ्च महाबलं ।
हयग्रीवञ्च दितिजं तथाऽन्यांश्चित्रयोधिनः । रोधयामास तन्मार्गं स्वसैन्येन महाबलः । ६८४५
निसुन्दो बलिनां श्रेष्ठो रथमारुह्य सत्वरः । जग्राह कार्म्मुकं दिव्यं हेमपृष्ठं दुरासदं ।
विव्याध दशभिर्व्वाणैर्निसुन्दो मधुसूदनं । केशवश्चापि सप्तत्या विव्याध निशितैः शरैः ।
अप्राप्तांस्तान्तरीक्षे तान्शरांश्चिच्छेद माधवः । ते सर्व्वे सैनिकाः कृष्णं समन्तात् पर्य्यवारयन् ।
शरजालेन महता च्छाद्यमानः सुरोत्तमः । दृष्ट्वा तान्दानवान् सर्व्वान् सक्रोधो मधुसूदनः ।

ततो दिव्येन चास्त्रेण पार्ज्जन्येन जनार्द्दनः । महता शरवर्षेण वारयामास तद्बलं । ६८५०
पञ्चपञ्चशरैस्तेषु एकैकेषु च तान् बहून् । पार्ज्जन्यस्य प्रभावेण सर्व्वान्मर्म्मस्वताडयत् ।
दुद्रुवुर्भयवित्रस्ता भग्नास्ते दानवा रणे । स्वसैन्यं विद्रुतं दृष्ट्वा निश्चक्राम पुनर्म्मृधे ।
विसृजञ्छरवर्षाणि च्छादयामास केशवं । न विभाति रणे सूर्य्यो नापि व्योम दिशो दश ।
शरैः सञ्छादयामास निसुन्दो गरुडध्वजं । सावित्रं नाम दिव्यास्त्रं जग्राह पुरुषोत्तमः ।
तेन बाणेन तान् बाणांश्चिच्छेद मधुसूदनः । बाणैर्व्बाणांस्तु सञ्छिद्य तत्र कृष्णो महाबलः । ६८५५
छत्रमेकेन बाणेन रथेशाश्च त्रिभिः शरैः । पुनश्चिच्छेद तानश्वांश्चतुर्भिश्चतुरः शरैः ।
सारथिं पञ्चभिर्व्बाणैर्ध्वजमेकेन चिच्छिदे । शरेणैकेन पुनः कृष्णः सुतीक्ष्णेन शितेन वै ।
शिरश्चिच्छेद भल्लेन निसुन्दस्य सुरोत्तमः । निसुन्दं पतितं दृष्ट्वा हयग्रीवः प्रतापवान् ।
शिलां प्रगृह्य महतीं तोलयामास दानवः । आविध्य सहसा मुक्तः शिलां शैलसमप्रभः ।
गृहीत्वा दिव्यपाञ्जन्यैमस्त्रमस्त्रविदाम्वरः । दिव्यास्त्रेण शिलां विष्णुः सप्तधा कृतवांस्तदा । ६८६०
तद्विदार्य्य महच्चाश्म पातयामास भूतले । ततस्तैः शार्ङ्गनिर्म्मुक्तैर्नानावर्णैर्महाशरैः ।
यथा देवासुरं युद्धमभवद्भरतर्षभ । नानाप्रहरणाकीर्णं तथा घोरमवर्त्तत ।
गरुडश्चो महाबाहुर्निजघान महासुरान् । महालाङ्गुलनिर्भिन्नाः शरखड्गनिपातिताः ।
विनेशुर्द्दानवाः सर्व्वे समासाद्य जनार्द्दनं । केचिच्चक्राग्निना दग्धा दानवाः पेतुरम्बरात् ।
सन्निकर्षगताः केचिद्गतासुविक्षतामनाः । असृजन् शरवर्षाणि वृष्टिमन्त इवाम्बुदाः । ६८६५
विक्षताङ्गाऽसुराः सर्व्वे कृष्णबाणप्रपीडिताः । शोणिताक्ताश्च दृश्यन्ते पुष्पिता इव किंशुकाः ।
व्यद्रवन्त सुवित्रस्ता भग्नास्तास्त्रियोधिनः । पुनस्तु क्रोधरक्ताक्षो वायुवेगेन दानवः ।
दशव्यामोच्छ्रितं वृक्षं समारुह्य वनस्पतिं । वृक्षमुत्पाट्य वेगेन प्रगृह्य तमधावत ।
चिक्षेप सुमहावृक्षं शिक्षया तु घनाकृतिः । वृक्षवेगानिलोद्धूतः शुशुभे सुमहास्वनः ।
ततः शरसहस्रेण त्वरमाणो जनार्द्दनः । नैकधा तञ्च चिच्छेद चित्रभक्तिनिभाकृतिं । ६८७०
पुनश्चैकेन बाणेन हयग्रीवस्य चोरसि । विव्याध स्तनयोर्म्मध्ये सायको ज्वलनप्रभः ।
विवेश सोऽतिवेगेन हृदि भित्त्वा विनिर्गतः । यः सहस्रं समास्तिकः सर्व्वान्देवानयोधयत् ।
तं जघान महाघोरं हयग्रीवं महाबलं । अपारतेजा दुर्द्धर्षः सर्व्वयादवनन्दनः ।
मध्ये लोहितगङ्गस्य भगवान्देवकीसुतः । औदकायां विरूपाक्षं पाप्मानं पुरुषोत्तमः ।
अष्टौ शतसहस्राणि दानवानां परन्तपः । निहत्य पुरुषव्याघ्रः प्राग्ज्योतिषमुपाद्रवत् । ६८७५
हत्वा पञ्चनदं नाम नरकस्य महासुरं । ततः प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ।
पुरमासादयामास तत्र युद्धमभून्महत् । ततः प्राध्मापयच्छङ्खं पाञ्चजन्यं महाबलः ।
शुशुभे स महाशब्दः संवर्त्तनिनदो यथा । श्रूयते त्रिषु लोकेषु भीमगम्भीरनिस्वनः ।
तं श्रुत्वा नरकश्चापि क्रोधसंरक्तलोचनः । लोहचक्राष्टसंयुक्तं विनल्वप्रतिमं रथं ।

रत्नकाञ्चनचित्राढ्यं वेदिकाभोगविस्तरं। वज्रध्वजेन महता काञ्चनेन विराजितं। ६८८०
हेमदण्डपताकाढ्यं वैदूर्य्यमणिकूवरं। शुक्लमश्वसहस्रेण रथं पररथारुजं।
लोहजालैश्च सञ्छन्नं चित्रभक्तिविराजितं। रथमध्यगतो वीरः ससन्ध्य इव भास्करः
नानाप्रहरणाकीर्णं रथं हेमपरिष्कृतं।
वक्त्रं तयोरञ्जदभिन्नवर्णव्यात्तद्रुमुल्कामनतुल्यतेजाः। किरीटमूर्द्धाऽर्कशताग्रनाभः कर्णौ तथा कुण्डलयोर्ज्वलन्तौ।
धूम्रवर्णा महाकाया रक्ताक्षा विकृताननाः। नानाकवचिनः सर्व्वे दैत्यदानवराक्षसाः। ६८८५
खड्गचर्म्मधराः केचित् केचित्तूणीरसंवृताः। शक्तिहस्तास्तथा केचिच्छूलहस्तास्तथाऽपरे।
गजवाजिरथौघैश्च चालयन्तश्च मेदिनीं। निर्ययुर्नगरात्क्रूराः सुसन्नद्धाः प्रहारिणः।
वृतो दैत्यगणैः सार्द्धं नरकः कालसन्निभः। भेरीशङ्खमृदङ्गानां पणवानां सहस्रशः।
वाद्यमानं स शुश्राव जीमूतनिनदोपमं। यतः कृष्णस्ततो गत्वा सर्व्वे ते विकृताननाः।
परिवार्य्य गरुत्मन्तं सर्व्वेऽयुध्यन्त सङ्गताः। महता च्छादयामासुः शरवर्षेण सैनिकाः। ६८९०
शक्तिशूलगदाप्रासांस्तोमरान् सायकान् बहून्। आकाशं छादयामासुर्विमुञ्चन्तः सहस्रशः।
कृष्णः कृष्णाम्बुदाकारः शार्ङ्गं गृह्य धनुस्ततः। विस्फार्य्य सुमहच्चापं धनुर्ज्ज्यलदनिस्वनं।
व्यसृजच्छरवर्षाणि दानवानां जनार्द्दनः। शरवर्षेण तत् सैन्यं व्यद्रवत्तु महाहवात्।
तद्युद्धमभवद्घोरं घोररूपेण रक्षसा। भग्नव्यूहाश्च ते सर्व्वे कृष्णवाणप्रपीडिताः।
केचिच्छिन्नभुजाश्चैव च्छिन्नग्रीवाशिराननाः। केचिच्चक्रैर्द्विधाभिन्नाः केचिद्दारितोरसः। ६८९५
केचिद्द्विधाकृताः शक्त्या गजाश्वरथवाहनाः। केचित् कौमोदकीभिन्नाः शङ्खशक्तिविदारिताः।
एवं विपोथिता सर्व्वा गजाश्वरथवाहिनी। तत्रासीन्नरकेणास्य युद्धं परमदारुणं।
यत् समासेन वक्ष्यामि तन्मे निगदतः शृणु। वासवः सुरसंघानां नरकः पुरुषोत्तमं।
योधयामास तेजस्वी मधुवन्मधुसूदनं। क्रोधरक्तान्तनयनो नरकः कालसन्निभः।
जग्राह कार्म्मुकं वीरः शक्रचापमिवोच्छ्रितं। ततोऽर्ककिरणप्रख्यं वाणं जग्राह केशवः। ६९००
दिव्येनास्त्रेण समरे पूरयामास तं रथं। उत्तमास्त्रं महापातं मुमोच नरको बली।
वज्रविस्फुर्जिताकारमायान्तं वीक्ष्य केशवः। चिच्छेदास्त्रं महाभागश्चक्रेण पुरुषोत्तमः।
व्यहनन् सारथिञ्चास्य शरेकेण जनार्द्दनः। सरथं सध्वजं साश्वं जघान दशभिः शरैः।
तनुत्रञ्चैव चिच्छेद शरेण मधुसूदनः। ततो विमुक्तकवचः सर्पस्त्वेव तनुर्यथा।
हताश्वो विरथो वीरो वितनुत्रश्च दानवः। जग्राह विमलञ्चासं लोहभारार्पितं दृढं। ६९०५
आविध्य सहसा मुक्तं शूलमिद्धाग्निसप्रभं। तदापतत्तु संप्रेक्ष्य शूलं हेमपरिष्कृतं।
द्विधाच्छिन्नं क्षुरप्रेण कृष्णेनाद्भुतकर्म्मणा। तद्युद्धमभवद्घोरं घोररूपेण रक्षसा।
उत्तमास्त्रं महापातं नरकेण महात्मनः। मुहूर्त्तं योधयामास नरकं मधुसूदनः।
अथ प्रचक्रस्तेजेण प्रदीप्तेनाकरोद्द्विधा। चक्रद्विधाकृतं तस्य शरीरमपतद्भुवि।

विभक्तं क्रकचेनेव गिरेः शृङ्गं द्विधाकृतं । कृष्णमासाद्य देवेशं जगामास्तमिवांशुमान् । ६८१०
चक्रोत्स्विन्ननिकृत्ताङ्गमुत्तमं पतितं रणे । वज्रेणेव विनिर्भिन्नं यथा गैरिकपर्व्वतं ।
भूमिस्तु पतितं पुत्रं निरीक्ष्यादाय कुण्डले । उपातिष्ठत गोविन्दं वचनञ्चेदमब्रवीत् ।
दत्तस्त्वयैव गोविन्द त्वयैव विनिपातितः । यथेच्छसि तथा क्रीड बालक्रीडनकैरिव ।
इमे ते कुण्डले देव प्रजास्तस्यानुपालय ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नरकवधे द्वाविंशत्यधिकशततोऽध्यायः ॥ १२२ ॥
॥ वैशम्पायन उवाच ॥ निहत्य नरकं भौमं वासवोपमविक्रमः । वासवावरजो विष्णुर्ददर्श नरकालयं । ६८१५
अथार्थगृहमासाद्य नरकस्य जनार्द्दनः । ददर्श धनमक्षय्यं रत्नानि विविधानि च ।
मणिमुक्ताप्रवालस्य वैदूर्य्यस्य च सञ्चयं । मसारगल्वार्ककूटांस्तथा वज्रस्य सञ्चयान् ।
जाम्बूनदमयान्यस्य शातकुम्भमयानि च । प्रदीप्तज्वलनाभानि शीतरश्मिनिभानि च ।
शयनानि महार्हाणि तथा सिंहासनानि च । हिरण्यदण्डं रुचिरं शीतरश्मिसमप्रभं ।
ददर्श सुमहच्छत्त्रं वर्षमाणमिवाम्बुदं । जातरूपस्य शुभ्रस्य धाराः शतसहस्रशः । ६८२०
वरुणादाहृतं पूर्व्वं नरकेणेति नः श्रुतं । यावदर्थं गृहे दृष्टं नरकस्य धनं बहु ।
न वै राज्ञा कुवेरेण न शक्रेण यमेन वा । रत्नसन्निचयस्तादृक् दृष्टपूर्व्वो न च श्रुतः ।
हते भौमे निसुन्दे च हयग्रीवे च दानवे । उपानिन्युस्ततस्तानि रत्नाण्यान्तःपुराणि च ।
दानवा हतशिष्टा ये कोषसञ्चयरक्षिणः । केशवाय महार्हाणि यान्यर्हति जनार्द्दनः ।
॥ दैत्या ऊचुः ॥ इमानि मणिरत्नानि विविधानि वसूनि च । भीमरूपाश्च मातङ्गाः प्रवालविकृताङ्कुशाः । ६८२५
हेमसूत्रमहाकक्षाश्चापतोमरशालिनः । रुचिराभिः पताकाभिर्वसाना विविधाः कुथाः ।
ते च विंशतिसाहस्रा द्विस्तावच करेणवः । अष्टौ शतसहस्राणि देशजाश्चोत्तमा हयाः ।
गोषु चापि कृतो यावान् कामस्तव जनार्द्दन । तावतीः प्रापयिष्यामो वृष्ण्यन्धकनिवेशनं ।
आविकानि च सूक्ष्माणि शयनान्यासनानि च । कामव्याहारिणश्चैव पक्षिणः प्रियदर्शनाः ।
चन्दनागुरुकाष्ठानि तथा कालीयकान्यपि । वसु यत्त्रिषु लोकेषु धर्म्मेणाधिगतन्तव । ६८३०
तत् सर्व्वं प्रापयिष्यामो वृष्ण्यन्धकनिवेशनं । देवगन्धर्व्वरत्नानि पन्नगानाञ्च यद्वसु ।
तानि सर्व्वाणि सन्तीह नरकस्य निवेशने ।
॥ वैशम्पायन उवाच ॥ एतत् सर्व्वं हृषीकेशः परिगृह्य परीक्ष्य च । शीघ्रमारोहयामास दानवैर्द्वारकां पुरीं ।
ततस्तद्वारुणं छत्रं स्वयमुत्क्षिप्य माधवः । हिरण्यवर्षं वर्षन्तमारुरोह विहङ्गमं ।
गरुडं पतगश्रेष्ठं मूर्त्तिमन्तमिवाम्बुदं । ततोऽभ्ययाद्गिरिश्रेष्ठमभितो मणिपर्व्वतं । ६८३५
तत्र पुण्या ववुर्वाता ह्यभवंस्तामलाः प्रभाः । मणीनां हेमवर्णानामभिभूय दिवाकरं ।
तत्र वैदूर्य्यवर्णानि ददर्श मधुसूदनः । सतोरणपताकानि द्वाराणि शिखराणि च ।
विद्युद्भूषितमेघाभः प्रबभौ मणिपर्व्वतः । हेमचित्रवितानैश्च प्रासादैरुपशोभितः ।

तत्र ता हेमवर्णाभा ददर्श मधुसूदनः । गन्धर्व्वासुरमुख्याणां प्रिया दुहितरस्तथा ।
ददर्श विपुलश्रोणीः संरुद्धा गिरिकन्दरे । नरकेण समानीता रच्यमाणाः समन्ततः । ११७०
त्रिपिष्टपसमे देशे तिष्ठन्तीरपराजिताः । निवसन्त्या यथा देव्यः सुखिन्यः कामवर्ज्जिताः ।
परिवव्रुर्महाबाहुमेकवेणीधराः स्त्रियः । सर्व्वाः काषायवासिन्यः सर्व्वाश्च नियतेन्द्रियाः ।
व्रतोपवासतन्वङ्ग्यः काङ्क्षन्त्यः कृष्णदर्शनं । समेत्य यदुसिंहस्य सर्व्वास्ताः स्त्रियोऽञ्जलीन् ।
नरकं निहतं मत्वा मुरञ्चैव महासुरं । हयग्रीवं निसुन्दञ्च ताः कृष्णं पर्य्यवारयन् ।
ये चासां रक्षिणो वृद्धा दानवा यदुनन्दनं । कृताञ्जलिपुटाः सर्व्वे प्रणिपेतुर्व्वयोऽधिकाः । ११७५
तासां परमनारीणामृषभाचं निरीक्ष्य तं । सर्व्वासामेव संकल्पः पतित्वेनाभवत्तदा ।
तस्य चन्द्रोपमं वक्त्रं समीक्ष्य मुदितेन्द्रियाः । सम्प्रहृष्टा महाबाहुमिदं वचनमब्रुवन् ।
सत्यञ्च तत्पुरा वायुरिहास्मान् वाक्यमब्रवीत् । सर्व्वभूतमतज्ञश्च देवर्षिरपि नारदः ।
विष्णुर्नारायणो देवः शङ्खचक्रगदासिधृक् । स भौमं नरकं हत्वा भर्त्ता च भविताद्य वः ।
सुप्रियं वत पश्यामश्चिरश्रुतमरिन्दमं । दर्शनेन कृतार्था हि वयमद्य महात्मनः । ११८०
ततस्ताः सान्त्वयामास प्रमदा वासवानुजः । सर्व्वाः कमलपत्राक्षीर्हृष्टाः प्रोवाच माधवः ।
सान्त्वयित्वा यथार्हेण सम्भाष्य च केशवः । यानैः किङ्करसंयुक्तैर्व्वाह मधुसूदनः ।
किङ्कराणां सहस्राणि रक्षसां वातरंहसां । शिबिकां वहतां तत्र निर्घोषः सुमहानभूत् ।
तस्य पर्व्वतमुख्यस्य शृङ्गं यत् परमार्च्चितं । विमलार्केन्दुसंकाशं मणिकाञ्चनतोरणं ।
सपक्षिगणमातङ्गं सव्यालमृगपादपं । शाखामृगगणाकीर्णं सुप्रस्तारशिलातलं । ११८५
न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितं । सुप्रपातमहासानुं विचित्रशिखरद्रुमं ।
अत्यद्भुतमचिन्त्यञ्च मृगवृन्दविलोडितं । जीवञ्जीवकसंघैश्च बर्हिभिश्च निनादितं ।
तदप्यतिबलो विष्णुर्दोर्भ्यामुत्पाट्य भास्वरं । आरोपयामास तदा गरुडे पक्षिणाम्वरे ।
मणिपर्व्वतशृङ्गञ्च सभार्य्यञ्च जनार्द्दनं । उवाह लीलया पक्षी गरुडः पतताम्वरः ।
सपक्षबलविक्षेपैर्हिमाद्रिशिखरोपमः । दिक्षु सर्व्वासु संह्लादं जनयामास पक्षिराट् । ११९०
आरुजन् पर्व्वताग्राणि पादपांश्च समाक्षिपन् । संजहार महाभ्राणि विजहार च कानिचित ।
विषयं समतिक्रम्य देवयोश्चन्द्रसूर्य्ययोः । ययौ वातजवः पक्षी जनार्द्दनवशे स्थितः ।
स मेरुं गिरिमासाद्य देवगन्धर्व्वसेवितं । देवसद्मानि सर्व्वाणि ददर्श मधुसूदनः ।
विश्वेषां मरुताञ्चैव साध्यानाञ्च नराधिप । भ्राजमानान्यतिक्रामदश्विनोश्च परन्तप ।
प्राप्य पुण्यतमान् लोकान् देवलोकमरिन्दमः । शक्रसद्म समासाद्य प्रविवेश जनार्द्दनः । ११९५
अवतीर्य्य स तार्क्ष्यात्तु ददर्श त्रिदशाधिपं । प्रीतश्चैवाभ्यनन्दत्तं देवराजः शतक्रतुः ।
प्रदाय कुण्डले दिव्ये ववन्दे तमथाच्युतः । सभार्य्यो विबुधश्रेष्ठं नरश्रेष्ठो जनार्द्दनः ।
सोऽर्च्चितो देवराजेन रत्नैश्च प्रतिपूजितः । सत्यभामा च पौलोम्या यथावदभिनन्दिता ।

वासवो वासुदेवश्च सहितौ जग्मतुस्ततः । अदित्या भवनं दिव्यं देवमातुर्महर्द्धिमत् ।
तत्रादितिमुपासन्तीमप्सरोभिः समन्ततः । ददृशाते महात्मानौ महाभागां तपोऽन्विताम् । ६९७०
ततस्ते कुण्डले दिव्ये प्रदायादितिनन्दनः । ववन्दे तां शचीभर्त्ता मातरं स्वां पुरन्दरः ।
जनार्द्दनं पुरस्कृत्य कर्म्म चैव शशंस तत् । अदितिस्तौ सुतौ प्रीत्या परिष्वज्याभिनन्द्य च ।
आशीर्भिरनुकूलाभिरभ्यवर्द्धयदच्युतम् । पौलोमी सत्यभामा च प्रीत्या परमया युते ।
अगृह्णीतां वरार्हाया देव्यास्तु चरणौ शुभौ । सा ते चाप्यवदत् प्रेम्णा देवमाता यशस्विनी ।
यथावदब्रवीच्चैव जनार्द्दनमिदं वचः । अधृष्यः सर्व्वभूतानामवध्यश्च भविष्यसि । ६९७५
यथैव देवराजोऽयमजितो लोकपूजितः । तव चेयं वरारोहा नित्यञ्च प्रियदर्शना ।
सर्व्वलोकेषु विख्याता दिव्यगन्धमनोरमा । सत्यभामोत्तमा स्त्रीणां सुभगा स्थिरयौवना ।
जरां न यास्यति वधूर्यावत्त्वं कृष्ण मानुषः । एवमभ्यर्च्चितः कृष्णो देवमात्रा महाबलः ।
देवराजाभ्यनुज्ञातो रत्नैश्च प्रतिपूजितः । वैनतेयं समारुह्य सहितः सत्यभामया ।
देवाक्रीडं परिक्रामन् पूज्यमानः सुरर्षिभिः । स ददर्श महाबाहुराक्रीडं वासवस्य च । ६९८०
दिव्यमभ्यर्च्चितं देवैः पारिजातं महाद्रुमं । नित्यपुष्पधरं हृद्यं पुण्यगन्धमनुत्तमं ।
यमासाद्य जनः सर्व्वां जातिं स्मरति पौर्व्विकीं । संरक्ष्यमाणं देवैस्तं प्रसह्यामितविक्रमः ।
उत्पाट्यारोपयामास गरुडे तं महाद्रुमं । सोऽपश्यत् सत्यभामा च दिव्यमप्सरसां गणं ।
पृष्ठतः सत्यभामा च दिव्यैर्वासाभिवीजिता । प्रायात्ततो द्वारवतीं वायुजुष्टेन वै पथा ।
श्रुत्वा तद्देवराजस्तु कर्म्म कृष्णस्य वै तदा । अनुमेने महाबाहुः कृतकर्म्मेति चाब्रवीत् । ६९८५
संपूज्यमानस्त्रिदशैर्महर्षिगणसंस्तुतः । प्रतस्थे द्वारकां कृष्णो देवलोकादरिन्दमः ।
सोऽभिपत्य महाबाहुर्दीर्घमध्वानमल्पवत् । पूजितो देवराजेन ददृशे यादवीं पुरीं ।
तथा कर्म्म महत् कृत्वा भगवान् वासवानुजः । उपायाद्द्वारकां कृष्णः श्रीमान् गरुडवाहनः ।
इति श्रीमहामहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि नरकवधे त्रयोविंशाधिकशततोऽध्यायः ॥ ॥ १२३ ॥
॥ जनमेजय उवाच ॥ प्रादुर्भावे मुनिश्रेष्ठ माथुरे चरितं शुभं । शृण्वन् वै नाधिगच्छामि तृप्तिं कृष्णस्य धीमतः ।
द्वारकायां निवसतः कृतदारस्य यद्गुणं । चरितं ब्रूहि कृष्णस्य सर्व्वं हि विदितं तव । ६९९०
॥ वैशम्पायन उवाच ॥ जनमेजय कृष्णस्य कृतदारस्य भारत । निबोध चरितं चित्रं तस्यैव सदृशं प्रभोः ।
प्राप्तदारो महातेजा वासुदेवः प्रतापवान् । रुक्मिण्या सहितो देव्या ययौ रैवतकं नृपः ।
उपवासावसानं हि रुक्मिण्याः प्रतिपूजयन् । तर्पयिष्यन् स्वयं विप्रान् जगाम मधुसूदनः ।
कुमाराः प्रययुस्तत्र पुत्रा भ्रातर एव च । प्रेषिता वासुदेवेन नारदस्याभ्यनुज्ञया ।
षोडशस्त्रीसहस्राणि जग्मुरेव च धीमतः । श्रद्धया परमया राजन् विष्णोरेवानुकम्पया । ६९९५
ततस्तत्र द्विजातीनां कामान् प्रादादधोक्षजः । अर्थिनां धर्म्मनित्यानां वन्दिनामिष्टवादिनां ।
कल्याणनामगोत्राणां महतां पुण्यकर्म्मणां । यैनिः श्रौतैश्च मौखैश्च शुद्धानां कुरुनन्दन ।

तर्पयित्वा द्विजान्कामैरिष्टैरिष्टः सतां हरिः । ज्ञातीन् सन्तर्पयामास यथार्हन्धर्म्मवत्सलः ।
उपवासावसानेऽथ भगवान् सविशेषतः । बहुमेने प्रियां भार्य्यां रुक्मिणीं भीष्मकात्मजां ।
वसतस्तस्य कृष्णस्य सदारस्यामितौजसः । सुखासीनस्य रुक्मिण्या नारदोऽभ्यागमत्ततः । ७०००
आगतश्चाप्रमेयात्मा मुनिमिन्द्रानुजस्तदा । शास्त्रदृष्टेन विधिना अर्च्चयामास केशवः ।
सोऽर्च्चितो वासुदेवेन मुनिरर्च्चतमः सतां । पारिजाततरोः पुष्पं ददौ कृष्णाय भारत ।
तद्वृक्षराजकुसुमं रुक्मिण्याः प्रददौ हरिः । पार्श्वस्था सा हि कृष्णस्य भोज्या नरवराऽभवत् ।
प्रतिगृह्य ततः पुष्पं कामारणिरनिन्दिता । शिरस्यमलपत्राढ्यं ददौ कृष्णेङ्गितानुगा ।
त्रैलोक्यरूपसर्व्वस्वं नारायणमनोहरा । शुशुभे तेन पुष्पेण द्विगुणं भैष्मकी तदा । ७००५
नारदस्तामुवाचाथ मुनिर्ब्रह्मसुतस्तदा । तवैवौपयिकं पुष्पमिदं देवि पतिव्रते ।
अलङ्कृतं पुष्पमेतत् संसर्गात्तव सर्व्वथा । अर्थहा च मतातेन त्वमेतत् पुष्प सुव्रते ।
कल्याणगुणसम्पन्ने सततं भर्तृवत्सले । अम्लानमेतत् सततं पुष्पं भवति कामिनि ।
संवत्सरपरं कालं कालज्ञे गुणसम्मते । ईप्सितानपि गन्धांश्च ददाति वदताम्वरे ।
शीतोष्णे चेप्सिते देवि पुष्पमेतत् प्रयच्छति । स्रवत्यपि रसान्देवि मनसा काङ्क्षितान् वरान् । ७०१०
सेव्यमानञ्च सौभाग्यं ददाति वरवर्णिनि । स्रवत्यपि तथा गन्धानीप्सितान् प्रीतिवर्द्धनान् ।
यानि चान्यानि पुष्पाणि त्वं देव्यभिलषिष्यसि । कुसुमं वृक्षराजस्य तानि तानि प्रदास्यति ।
एतदेव भगाधानं धर्म्मिष्ठे धर्म्मदं तथा । मतिं न चाशुभे धत्ते धार्य्यमाणं तथा शुभे ।
यद्यदिच्छसि वर्णञ्च तत् सर्व्वं धारयिष्यति । स्वल्पं वाऽप्यथ वा स्थूलं छन्दतस्ते भविष्यति ।
अनिष्टगन्धहरणमेतत् सद्गन्धवर्द्धनं । प्रदीपकर्म्म रात्रौ च करोति कमलेक्षणे । ७०१५
सन्तानकस्रजो मालां पुष्पवस्त्रादि चाच्युतं । पुष्पमण्डपमुख्यानि चिन्तिते ते प्रदास्यति ।
वुभुक्षा वा पिपासा वा ग्लानिर्व्वाऽप्यथ वा जरा । देवत्वद्धारयन्त्यास्ते स्वच्छन्देन भविष्यति ।
अनुगीतानि गीतानि गास्यत्यपि च चिन्तिते । सुवादित्रान् सुमधुरांस्तथैव स्तवसंस्थितान् ।
पूर्णे संवत्सरे देवि पुष्पमेतत्त्वदन्तिकात् । निवर्त्स्यते तरुवरं समयेन प्रयास्यति ।
कृतिरेषा हि भद्रन्ते पारिजातस्य सुव्रते । निसर्गतः सर्गकृता सत्काराय्येंऽसुरद्विषां । ७०२०
उमा देववरश्रेष्ठा हिमाचलसुता सती । धारयेदीश्वरी नित्यं पुष्पाण्येतानि सुप्रभे ।
अदितिश्च सपौलोमी महेन्द्रसुरतारणी । सावित्री वेदमाता च श्रीश्च सर्व्वगुणोदिते ।
देवपत्न्यस्तथैवान्या देवाश्च वसुदेवताः । संवत्सरपरः कालः सर्व्वेषान्तु न संशयः ।
षोडशस्त्रीसहस्राणां मध्ये स्वस्त्यद्य वर्त्तसे । श्रेष्ठां वासुदेवस्य वेद्मि त्वां भोजनन्दिनि ।
सपत्न्यस्ते गुणोपेते सर्व्वाः सर्व्वेश्वरप्रिये । अवमानावसेकेन त्वया सिक्ताऽद्य भाविनि । ७०२५
प्रकाशमद्य सौभाग्यमनिवार्य्यं यशश्च ते । मन्दारकुसुमं दत्तं यत्ते मधुनिघातिना ।
अद्य सात्राजिती देवी ज्ञास्यत्यवरवर्णिनी । सौभाग्याढ्यं सदा वेत्ति यात्मानं सुभगा सती ।

शाम्बमाताऽथ गान्धारी भार्य्यास्त्वान्या महात्मनः । सौभाग्यार्थोच्चताकाङ्क्षामद्य मोच्यन्ति निस्पृहाः ।
सौभाग्यैकरयो जैत्रस्तव देव्यद्य निःसृतः । मनोरथरथानां यः सहस्रैरपि दुर्ज्जयः ।
अद्याहमवगच्छामि सर्व्वथा सर्व्वशोभने । आत्मा द्वितीयः कृष्णस्य भोजे त्वमिति भाविनि । ७०१०
त्रैलोक्यरत्नसर्व्वस्वमदद्यत्तवाच्युतः । जीवितातिशयस्तेन त्वया प्राप्तो हरिप्रिये ।
नारदेनैवमुक्तन्तु तथ्यं वाक्यं नराधिप । तत्रस्थाः शुश्रुवुः प्रेष्याः प्रेषिताः सत्यभामया ।
देवीनाञ्च तथाऽन्यासां सपत्नीनां विशाम्पते । दृष्ट्वा ताः सविशेषञ्च नारदेनाप्युदाहृतं ।
तच्च श्रुत्वा सुनिखिलं प्रेष्याभिः स्त्रीस्वभावतः । प्रकाशीकृतमेवासीद्विष्णोरन्तःपुरे तदा ।
कर्णाकर्णि ततो देव्यः कौलीनमिव संवशः । मन्त्रयाञ्चक्रिरे हृष्टा रुक्मिण्याऽतिगुणोदयं । ७०१५
अर्हेति पुत्त्रमातेति ज्येष्ठेति च समागताः । प्रायेण प्रवदन्ति स्म हृष्टा दामोदरस्त्रियः ।
मन्त्रषे न सपत्न्यास्तु तत् सौभाग्यगुणोदयं । सत्यभामा प्रिया नित्यं विष्णोरतुलतेजसः ।
रूपयौवनसम्पन्ना सौभाग्येन च गर्व्विता । अभिमानवती देवी श्रुत्वेर्ष्यावशमागता ।
समुत्सृजन्ती वसनं सकुङ्कुमं शुचिस्मिता शुक्लतमेकमंशुकं । जगाह रोषाकुलितेन चेतसा वह्नेः शिखा श्रीरिव वर्द्धितानना ।
दन्दह्यमाना ज्वलनेन वर्द्धता सेर्ष्यासमुत्थेन गतप्रभेव । क्रोधान्विता क्रोधगृहं विविक्तं विवेश तारेव घनं सतोयं । ७०२०
बद्धा ललाटे हिमचन्द्रशुभ्रं दुकूलपट्टं प्रियरोषचिह्नं । पर्य्यन्तदेशं सरसेन देवी लिलेप सा लोहितचन्दनेन ।
संस्मृत्य संस्मृत्य शिरः सरोषं प्रकम्पमाना समुपोपविष्टा । दीर्घोपधाने शयने ऽपनीय विभूषणान्येकनिबद्धवेणी ।
अकारणार्थेन विरुध्यमाणा प्रेष्याजनस्याभिजनान्विताऽपि । विचूर्णयामास कुशेशयं सा निःश्वस्य निःश्वस्य नखैर्नतभ्रूः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे चतुर्विंशत्यधिकशततोऽध्यायः ॥ १२४ ॥
॥ वैशम्पायन उवाच ॥ उपविष्टं मुनिं ज्ञात्वा रुक्मिण्या सह केशवः । निस्क्रामाप्रमेयात्मा व्यपदेशेन सर्व्ववित् ।
जगाम त्वरितश्चैव सत्यभामागृहं महत् । रम्ये रैवतकोद्देशे निर्म्मितं विश्वकर्म्मणा । ७०२५
अभिमानवतीं देवीं प्राणेभ्योऽपि गरीयसीं । जानन् साचाजितीं विष्णुर्विवेश शनकैरिव ।
रुषितामिव तां देवीं स्नेहात् संकल्पयन्निव । भीतभीतः स शनकैर्विवेश यदुनन्दनः ।
दारुकं द्वारदेशे तु तिष्ठेत्युक्ता विवेश ह । नारदस्योपचारार्थं प्रद्युम्नं विनियुज्य च ।
स ददर्श प्रियां दूरात् क्रोधागारगतां तदा । प्रेष्यामध्यगतां क्रोधान्निःश्वसन्तीं मुहुर्म्मुहुः ।
करजाग्रावलीढन्तु पङ्कजं मुखपङ्कजे । संक्षेपयित्वा निश्वस्य विहरन्तीं पुनः पुनः । ७०३०
किञ्चिदाकुञ्चिताग्रेण चरणेन वसुन्धरां । कृत्वा पृष्ठेऽथ वदनं विहसन्तीं पुनः पुनः ।
करपद्मे पुनः सव्ये मुखपद्मं निवेश्य च । विविक्ते चारुसर्व्वाङ्गीं ध्यायन्तीं कमलेक्षणां ।
सरसं चन्दनं गृह्य प्रेष्याहस्तादनिन्दितां । प्रह्लादयित्वा हृदयं क्षिपन्तीं निर्द्दयं पुनः ।
पुनरुत्थाय शयनात् पतन्तीञ्च पुनः पुनः । तास्ता ज्येष्ठास्तथाऽन्याश्च प्रियाया ददृशे हरिः ।
अवगुण्ठ्य यदा वक्त्रमुपधाने न्यवेशयत् । इदमन्तरमित्येवं ततो मत्वा जनार्द्दनः । ७०३५
प्रेष्याजनं संज्ञयाऽथ नाख्येयोऽस्मीति संज्ञपन् । स शङ्कितप्रचारस्तु त्वरितोऽन्तिकमभ्ययात् ।

प्रहाय व्यजनं चैव स्थिता स परिपार्श्वतः । शनैरवाहयद्वातं प्रहाय शनकैरिव ।
स पारिजातपुष्पस्य संस्पर्शेनानुवासितः । बभार भगवान् गन्धं दिव्यं मानुषदुर्लभं ।
अत्यद्भुततमं गन्धं जिघ्रित्वा विस्मयान्विता । अपाङ्गेणामुखं सत्या किमेतदिति चाब्रवीत् ।
सोत्थिता पृष्ठतो देवमपश्यन्ती शुचिस्मिता । पर्य्यपृच्छदथो प्रेष्या गन्धस्य प्रभवन्तदा । ७०६०
ताः दृष्ट्वास्य प्रभावन्तो जानुभिर्द्धरणीं गताः । अधोमुख्यस्ततस्तस्थुः कृताञ्जलिपुटास्तदा ।
तदपूर्व्वमदृष्ट्वैव गन्धं मुञ्चति मेदिनी । कथमेकतरस्तस्या गन्धोऽयमिति तत् खलु ।
किं स्विदं स्यादिति च सा संविचन्ती समन्ततः । ददर्श केशवं देवी सहसा लोकभावनं ।
युज्यतीति ततो वाचमुक्ता सास्राविलेक्षणा । अवसितेव रोषेण बभूव प्रणयान्विता ।
सा प्रस्फुरितचार्व्वोष्ठी निःश्वासाधोमुखी तदा । मुहूर्त्तमसितापाङ्गी तस्थावन्यमुखी शुभा । ७०६५
निबध्य भ्रुकुटीं वामां सम्यगुत्क्षिप्य लोचने । निवेश्य वदनं हस्ते शोभयोत्यब्रवीद्धरिं ।
तस्याः सुस्राव नेत्राभ्यां वारि प्रणयकोपजं । कुशेशयपलाशाभ्यामवश्यायजलं यथा ।
समुत्पत्य जलं तच्च पतितं वदनाम्बुजात् । प्रतिजग्राह पद्माक्षः कराभ्यामपि सत्वरः ।
अधोरसि पतत्तोयं श्रीवत्साङ्कोऽम्बुजेक्षणः । प्रियानयनजं देवः परिमृज्येदमब्रवीत् ।
स्रवत्यसितपद्माक्षि किमिदं तव भाविनि । तोयं सुन्दरि नेत्राभ्यां पुष्कराभ्यामिवोदकं । ७०७०
प्रभाते पूर्णचन्द्रस्य मध्याह्ने पङ्कजस्य च । बिभर्त्ति तव किं वक्त्रं वपुर्भाम मनोहरं ।
किमर्थं कौङ्कुमं वासो महारजनमेव च । नानुतिष्ठसि सुश्रोणि शुक्लं वासोऽनुतिष्ठते ।
वाससी ते तवाभीष्टे महारजनकौङ्कुमे । देवाभिगमनादूर्द्ध्वं शुक्लं नेष्टं हि ते प्रिये ।
किन्त्वानाभरणं गात्रं सुगात्रि तव कथ्यतां । चित्रकस्थानमाक्रान्तं कस्माच्च वरवर्णिनि ।
श्वेतेन तव पट्टेन वाससा प्रियदर्शने । ललाटं सेव्यते कस्माच्चन्दनेन सुगन्धिना । ७०७५
सरसेनायतापाङ्गि कान्तेन हृदयप्रिये । प्रभोपमर्द्दकेनाथ कारणेनाननस्य च ।
करोषि मम चात्यर्थं मनो म्लापयसि प्रिये । प्रसृतश्चन्दनरसः कपोलप्रणयी तव ।
पत्रलेखास्पदत्वं प्राप्तो नातिविराजते । रत्नस्याभरणैर्मुक्ता श्रोणिस्ते नातिशोभिता ।
ग्रहनक्षत्ररहिता द्यौरिवाव्यक्तशारदी । पूर्णचन्द्रसपत्नेन स्वैरेणामृतभाषिणा ।
किमु नाभाषसे माऽद्य मुखेनोत्पलगन्धिना । अर्द्धक्षणेऽपि हि तावन्मां किमर्थं न निरीक्षसे । ७०८०
मुञ्चस्येव सनिश्वासं तोयमञ्जनदुर्द्दिनं । अलमिन्दीवरश्यामे रुदितेन मनस्विनि ।
जलमञ्जनकल्माषं मा मोचीराननद्विषं । त्वदीयोऽहं यथा देवि ख्यातो जगति किङ्करः ।
नाज्ञापयसि मां किं त्वं पुरेव वरवर्णिनि । किमकार्षमहं देवि विप्रियं तव भाविनि ।
येनातिमात्रमात्मानमायासयसि सुन्दरि । मनसा कर्म्मणा वाचा न त्वामतिचराम्यहं ।
सर्व्वथा सर्व्वदा सर्व्वं सत्यमेतद्ब्रवीमि ते । बहुमानो ममान्यासु स्त्रीषु सर्व्वाङ्गशोभने । ७०८५
स्नेहस्य बहुमानस्य त्वामृतेऽन्यासु नास्ति मे । नैव त्वां मदनो जह्यान्मृतेऽपि मयि मामकः ।

इति मे निश्चितं विद्धि चैतः सुरसुतोपमे । क्षमा मन्थश्च मेदिन्यां शब्दाद्याश्चाम्बरे गुणाः ।
ध्रुवं पङ्कजगर्भाभे त्वयि स्नेहस्तथा मम । रुचिरश्च यथा दिव्या प्रभा चैव दिवाकरे ।
कान्तिश्च शाश्वती चन्द्रे स्नेहस्त्वयि तथा मम । एवंवादिनमात्मेष्टं सत्यभामा जनार्द्दनं ।
शनैरुवाच नेत्राभ्यां प्रमृज्य सुभगा जलं । मदीयस्त्वमिति ह्यासीन्मम नित्यं मनः प्रभो । ७०९०
अद्य साधारणस्नेहस्त्वमित्यवगता ह्यहं । नाज्ञासिषमहं पूर्व्वमनित्यं कालपर्य्ययं ।
अद्य लोकगतिं कृत्स्नामवगच्छामि न ध्रुवां । अमृतायाः द्वितीयोऽयं जन्युर्हि मम सर्व्वथा ।
किमत्र बहुनोक्तेन हृदयं वेत्ति तेऽच्युत । वाङ्मात्रमिव पश्यामि माधुर्य्यं संप्रयुज्यते ।
मयि स्नेहस्य कृतकस्तवान्यच न कृत्रिमः । ऋजुस्वभावां यां भक्तां सर्व्वथा पुरुषोत्तम ।
अवजानासि जानन्मे कैतवीं वृत्तिमास्थितः । एतावत् खलु पर्य्याप्तं दृष्टं द्रष्टव्यमव्ययं । ७०९५
श्रुतश्चाप्यथवा श्राव्यं दृष्टः स्नेहफलोदयः । यदि त्वहमनुग्राह्या मामनुज्ञातुमर्हसि ।
तपस्येऽहं परं कृत्वा निश्चयं पुरुषोत्तम । भर्त्तुश्छन्देन नारीणां तपो वा व्रतकानि वा ।
निष्फलं खलु यद्भर्त्तुरच्छन्देन क्रियेत ह ।
इतीदमुक्त्वा पुनरेव शोभना मुमोच तोयं नयनोद्भवं सती। गृहाय पीतं हरिवाससः शुभा पटान्तमाधाय मुखे शुचिस्मिता ।
॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पञ्चविंशत्यधिकशततोऽध्यायः ॥ १२५ ॥
॥ वैशम्पायन उवाच ॥ नारायणः सत्यभामां पुनरेवाथ भारत । प्रोवाच प्रणयात् क्रुद्धामभिमानवतीं सतीं । ७१००
॥ वासुदेव उवाच ॥ दहतीव ममाङ्गानि शोकः कमललोचने । किमु तत्कारणं येन त्वमेवमतिविक्लवा ।
शापिताऽसि मम प्राणैराचक्ष्वानत्ययो यदि । श्रोतव्यं यदि भक्तेन भर्त्रा सर्व्वाङ्गशोभने ।
ततः प्रोवाच भर्त्तारं सत्या सत्यव्रते स्थितं । वाष्पगद्गदया वाचा तथैवाधोमुखी स्थिता ।
त्वयैव ख्यापितं पुर्व्वं सौभाग्यं मम मानद । जगत्यमलपत्राक्ष तत् ख्यातं केशिनाशन ।
शिरो वहामि चेष्टत्वात्तवाहं देव गर्व्विता । सर्व्वसीमन्तिनीनाञ्च स्पृहणीयाऽस्मि सर्व्वथा । ७१०५
साऽहमद्यावहास्यामि सपत्नीनां जनस्य च । इति प्रेष्याभिराख्यातं श्रुत्वा तथ्यं ततस्ततः ।
यत् पारिजातकुसुमं दत्तवान्नारदस्तव । तत्किलेष्टजने दत्तं त्वयाऽहं परिवञ्चिता ।
रत्नातिशयदानेन तस्यामधिकः किल । स्नेहस्य बहुमानस्य प्रकाशं गमितस्त्वया ।
तामस्तौषीत् समक्षन्ते प्रियां स किल नारदः । तदश्रौषीश्च हृष्टस्त्वं प्रियायाः संस्तवं किल ।
स्तोतव्या यदि तावत् सा नारदेन तवाग्रतः । दुर्भगोऽयं जनस्तत्र किमर्थमनुशब्दितः । ७११०
प्रणयस्य रसं दत्त्वा पश्चात्तापः प्रभो यदि । अनुज्ञां मे प्रयच्छस्व तपश्चर्तुं प्रसीद मे ।
स्वप्नेनापि न दृष्टाऽहं श्रद्दध्यां पुष्करेक्षण । यदन्येदव निर्वृत्तमशेषं पश्यतस्तव ।
कामः काममनु तस्यैतन्मुनेरतुलतेजसः। अत्र मन्युस्तु मे देव सान्निध्यं तव तत्र यत् ।
मानार्थं जीव्यते लोके सद्भिरित्युक्तवानसि । तदेवं सति नेच्छामि जीवितुं मानवर्जिता ।
ममाभवद्यतो रक्षा भयमद्य ततो मम । सर्व्वतो रक्षते यो मां स मां नाद्याभिरक्षति । ७११५

हा गतिं कां गमिष्यामि त्यक्ता देव त्वया विभो । कुमुद्वतीगतां नूनं गतिं यास्यामि सङ्गता ।
किम्कार्यमहं मोहादीश्वराणां प्रियाप्रियं । प्रिया भूत्वाऽप्रिया भूता यदहं तव मानद ।
वसन्तकुसुमैश्चित्रं सदा रैवतकं गिरिं । प्रिया भूत्वाऽप्रियाभूता कथं द्रक्ष्याम्यहं पुनः ।
परपुष्टस्वनोन्मिश्रं पुष्पगन्धवहं शुचिं । कथं नामानिलं देव्या सेवेयं दुर्भगा सती ।
जलक्रीडां तवाङ्कस्था देव कृत्वा महोदधौ । कथं दौर्भाग्यमापन्ना पश्येयमपि सागरं ।
सात्राजिति प्रिया मान्या त्वत्तो मेऽस्तीति यद्धि मां । त्वमवोचः क तद्यातमथ वा कः स्मरिष्यति ।
यदद्राक्षीद्धि मां श्वश्रूर्बहुमानेन नन्दिनी । अवज्ञातां त्वयाऽद्राक्षीन्नूनं दौर्भाग्यकर्षितां ।
किन्तु मूढेन ते प्रेम्णा सुस्निग्धेनापि मानद । यत् समानां जनैर्देवो मां न पश्यति नित्यदा ।
नाहं त्वां कितवं धूर्त्तमज्ञासिषमरिन्दम । अद्य ज्ञातोऽसि तत्पत्नश्चपलो जनवञ्चकः ।
स्वरवर्णेङ्गिताकारान्निगूढादेव यत्नतः । चौर ज्ञातोऽसि तत्पत्न वाङ्मात्रमधुरः शठः ।
एवमीर्ष्यावशं प्राप्तां देवीं सात्राजितीं हरिः । अभिमानवतीं देवः सान्त्वपूर्व्वमथाब्रवीत् ।
मैवं पद्मपलाशाक्षि ममेश्वरि वद प्रिये । किमत्र बहुनोक्तेन त्वदीयमवगच्छ मां ।
तत् पारिजातकुसुमं तस्या देवि मयागतः । नारदो मत्प्रियं कुर्व्वन् मुनिरक्लिष्टकर्म्मकृत् ।
दाक्षिण्यादनुरोधाच्च दत्तवानत्र संशयः । प्रसीदैकापराधं मे मर्षयस्व शुचिस्मिते ।
पारिजातस्य पुष्पाणि यदीच्छस्यतिकोपने । तदा दाताऽस्मि सुश्रोणि सत्यमेतद्ब्रवीमि ते ।
स्वर्गादिहानयित्वा च पारिजातं द्रुमेश्वरं । गृहे ते स्थापयिष्यामि यावत्कालं त्वमिच्छसि ।
एवमुक्ता तु हरिणा प्रोवाच हरिवल्लभा । यद्येवं स द्रुमः शक्य इहानयितुमच्युत ।
मन्युरेष प्रनष्टो हि भवेद्बहुगुणं मम । सीमन्तिनीनां सर्व्वासामधिका स्यामधोक्षज ।
तथाऽस्तु प्रथमः कल्प इति तां मधुसूदनः । प्रोवाचाप्रतिमो देवो जगतः प्रभवाव्ययः ।
तथेत्युक्ते तु कृष्णेन तुतोष समितिञ्जय । सत्यभामा सतामिष्टा कंसनाशनवल्लभा ।
ततः स्नातो जगन्नाथः सर्व्वात्मा सर्व्वभावनः । चकारावश्यकं सर्व्वं सर्व्वकामप्रदः सतां ।
दध्यौ च नारदं देवो ध्यातो देवमुनिर्नृप । अभ्याजगाम स स्नात्वा मुनिश्रेष्ठो महोदधौ ।
तमागतं नरपते सतां गतिरधोक्षजः । सत्यया सह धर्म्मात्मा यथाविधिमपूजयत् ।
पादौ प्रक्षालयाञ्चक्रे मुनेः सात्राजिती स्वयं । जलं देवः स्वयं कृष्णो भृङ्गारेण ददौ तदा ।
अथोपकल्पयामास सुखासीनाय केशवः । परमान्नं स मुनये प्रयतात्मा जगद्गुरुः ।
तल्लोककर्त्रा सत्कृत्य दत्तं मुनिरुदारधीः । बुभुजे वदतां श्रेष्ठः श्रद्धया परयाऽन्वितः ।
उपस्पृश्य ततस्तृप्तः प्रददौ चाशिषः प्रभोः । ताश्च प्रीतेन मनसा प्रतिजग्राह केशवः ।
ततः सात्राजितीं देवीं प्रणतां नारदोऽब्रवीत् । प्रसार्य्य दक्षिणं हस्तं सजलं जलजेक्षणां ।
यथेदानीं तथैव त्वं भव देवि पतिव्रता । सविशेषञ्च सुभगा भव मत्तपसो बलात् ।
इत्युक्ता मुनिमुख्येन सत्यभामा हरिप्रिया । उत्तस्था महता युक्ता हर्षेण तु नराधिप ।

कृष्णोऽभ्यनुज्ञां कौरव्य लब्ध्वा मुनिवरात्तदा । बुभुजे विघसं धीमानप्रमेयपराक्रमः ।
ततस्त्वावश्यकं कृत्वा सत्यभामाऽपि भारत । अनुज्ञया तदा भर्त्तुर्विवेशान्तर्गृहं मुदा ।
ततो विनिर्गता देवी कृष्णस्यैवाभ्यनुज्ञया । स्थिता पार्श्वे च कृष्णस्य नमस्कृत्वा महात्मने ।
ततो मुहूर्त्तमासित्वा नारदः कृष्णमब्रवीत् । आपृच्छे त्वां गमिष्यामि शक्रलोकमधोक्षज ।
तत्राद्यं देवमीशानं नमस्कृत्य महेश्वरं । गास्यन्ति देवगन्धर्व्वास्तथैवाप्सरसां गणाः ।
मासि मास्युचितं ह्येतन्महेन्द्रसदने विभो । पूजार्थं देवदेवस्य गान्धर्व्वं नृत्यमेव च ।
अन्तर्हितो देवदेवः सोमः सप्रवरो विभुः । पश्यत्यमरमुख्येण हृतं भक्त्याऽद्रिघातिना ।
निमन्त्रितोऽहं पूर्व्वेद्युः पुष्पं दातुं महाद्युते । पारिजातस्य भद्रं ते तरुराज्ञो महात्मनः ।
यदेतदाहृतं स्वर्गात्तवार्थेऽभो मया विभो । देवोपभोग्यमेतद्धि तरुराजसमुद्भवं ।
दृष्टः स वृक्षः सततं शच्याः पुष्करलोचन । सौभाग्यमावहत्येव पूज्यमानोऽपि नित्यशः ।
पुण्यं कर्त्तुं तदा सृष्टः पारिजातो महाद्रुमः । अदित्या धर्म्मनित्येन कश्यपेन महात्मना ।
पुराऽदित्या महातेजास्तोषितः किल कश्यपः । वरेण च्छन्दयामास मारीचस्तपसो निधिः ।
सोवाच सुभगा येन भवेयं मुनिसत्तम । स्वलङ्कृता कामतश्च सर्व्वैरेव विभूषणैः ।
ईप्सितं गीतनृत्यञ्च भवेन्मम तपोधन । कुमारी नित्यदा चैव भवेयं तपसां निधे ।
विरजाः शोकरहिता भवेयमपि नित्यदा । पतिभक्तिमती चैव धर्म्मशीला तथैव च ।
पारिजातं ततोऽस्राक्षीददित्याः प्रियकाम्यया । सर्व्वकामप्रदैः पुष्पैरावृतं दिव्यगन्धदैः ।
त्रिशाखं सर्व्वदा दृश्यं सर्व्वभूतमनोहरं । सर्व्वपुष्पाणि दृश्यन्ते तस्मिन्नेव महाद्रुमे ।
ईदृशान्यस्य पुष्पाणि बिभर्त्त्येकाऽतिरूपिणी । वज्ररूपाणि चाप्यन्या पद्मानि च तथाऽपरा ।
मन्दरादपि वृक्षाच्च सारमुद्धृत्य कश्यपः । तस्मादेष तरुश्रेष्ठः सर्व्वेषां ज्येष्ठतां गतः ।
ततस्तत्र निबध्याथ कश्यपं प्रददौ शुभा । अदितिर्म्मम पुण्यार्थं सौभाग्यार्थं तथैव च ।
निष्क्रयेण मया मुक्तः कश्यपस्तु तपोधनः । इन्द्रो दत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम ।
सोमस्ताप्यथ रोहिण्या ऋद्ध्या च धनदस्तथा । एवं सौभाग्यदो वृक्षः पारिजातो न संशयः ।
पारे जातो विष्णुपद्याः पारिजातेति शब्दितः । मन्दारपुष्पैर्य्युक्तो मन्दारस्तेन कथ्यते ।
कोऽप्ययं दारुरित्याऽऽरजानन्तो यतो जनाः । कोविदार इति ख्यातस्तत्त्वतः स महातरुः ।
मन्दारः कोविदारश्च पारिजातश्च नामभिः । स वृक्षो ज्ञायते दिव्यो यस्यैतत् कुसुमोत्तमं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे षड्विंशत्यधिकशततोऽध्यायः ॥ १२६ ॥
॥ वैशम्पायन उवाच ॥ ततो जिगमिषुन्तत्र नारदं मुनिसत्तमं । प्रोवाच भगवान् विष्णुरप्रमेयपराक्रमः ।
महर्षे धर्म्मतत्त्वज्ञ स्वर्गं गत्वा त्वयाऽनघ । दृष्ट्वा सदस्यान्देवस्य त्रिपुरघ्नस्य धीमतः ।
अनाज्ञया मद्वचनाद्विज्ञाप्यः पाकशासनः । संवर्णयित्वा माहत्वं पौराणं वेत्सि यन्मुने ।
यमस्याचीन्मुनिश्रेष्ठो भगवान् कश्यपस्तरुं । पारिजातं पुराऽदित्याः प्रियार्थं धर्म्मवित्तमः ।

स पुण्यमतिसौभाग्यं ददाति तरुसत्तमः। तव दत्तं पुरा दानं व्रतेन तरुसत्तमे। ७१७५
देवीभिर्द्धर्म्मनित्याभिर्द्धर्म्मार्थममरोत्तम। दत्तं श्रुत्वाऽभिकाङ्क्षन्ति दातुं पत्न्यो मम प्रभो।
पुण्यार्थं दानधर्म्मार्थं मम प्रीत्यर्थमेव च। आनायय द्वारवतीं पारिजातं महाद्रुमं।
दत्ते दाने पुनः स्वर्गं तत्र तं नाययिष्यसि। प्रवाच्य एवं भगवान् बलभिद्भगवंस्त्वया।
तथा तथा प्रयत्नश्च कार्य्यो मुनिवर त्वया। यथा तरुवरं दद्यात् पारिजातं सुरेश्वरः।
तत्र दूतगुणांस्तावत् पश्यामस्ते तपोधन। सम्भाव्या सर्व्वकृत्यानां सम्पद्धि त्वयि मे मता। ७१८०
एवं नारायणेनोक्तो नारदो भगवानृषिः। प्रहस्योवाच कौरव्यमिदं वाक्यं तपोधनः।
वाढमेवं प्रवक्ष्यामि यदुमुख्य सुरेश्वरं। न तु दास्यति देवेन्द्रः पारिजातं कथञ्चन।
मन्दरं पर्व्वतश्रेष्ठं दानवैस्त्रिदशैस्तथा। निक्षिप्य तोयधौ पूर्व्वं पारिजातः समाहृतः।
मन्दरं पर्व्वतश्रेष्ठं नयितुं प्रेषितः पुरा। पारिजातं हरेणापि लोककर्त्ता जनार्द्दन।
स्वयं विज्ञापितो गत्वा ततः शक्रेण शङ्करः। आक्रीडद्रुम उद्याने शच्याः स्यादिति याचितः। ७१८५
तथाऽस्त्विति वरो दत्तो महादेवेन चानघ। न च नीतः पारिजातो मन्दरं चित्रकन्दरं।
क्रीडावृत्तः स शच्येति व्यपदेशेन मोचितः। महेन्द्रेण महाबाहो पारिजाततरुः पुरा।
प्रियार्थमुमयाऽस्राक्षीत् पारिजातवनं हरः। गव्यूतिशतविस्तीर्णं मन्दरस्यैव कन्दरे।
न तत्र सूर्य्यभाः कृष्ण प्रविशन्ति नगोत्तमे। न चन्द्रस्य प्रभाः शीता नैव कृष्ण सदागतिः।
शीतोष्णे च्छन्दतस्तत्र शैलपुत्त्र्या भवन्ति हि। स्वयम्प्रभं वनं तद्धि महादेवस्य तेजसा। ७१९०
वर्ज्जयित्वा महादेवं सगणं यदुवर्द्धन। मान्यान्यस्तद्वनं दिव्यं न प्रयाति कथञ्चन।
स्रवन्ति तत्र वार्ष्णेय पारिजाताः समन्ततः। सर्व्वरत्नानि मुख्यानि मनसा काङ्क्षितानि वै।
गणास्तान्युपभुञ्जन्ति प्रवराणां महात्मनां। आज्ञया देवदेवस्य लोकनाथस्य केशव।
पारिजाताद्दशगुणं फलं तेषां तथा वनं। अभिमानं प्रभाश्चैव गुणा भूरिगुणास्तथा।
मूर्त्तिमन्तश्च ते वृक्षाः सोमं देवं वृषध्वजं। उपतिष्ठन्ति सततं प्रवरैः सह केशव। ७१९५
रौद्रेण तेजसा जुष्टा दुःखैर्हीनाः सुखान्विताः। तरवो मन्दरे ते हि दयिताः शैलकन्यया।
प्रविवेशान्धको नाम घोरस्तत्र महाबलः। दैतेयो वरदानेन दर्पितः पापनिश्चयः।
स हतो देवदेवेन हरेणामित्रघातिना। अवध्यः सर्व्वभूतानां वृत्राद्दशगुणं बली।
एवं दुःखेन ते देव पारिजातं प्रदास्यति। पुष्कराच सहस्राक्षः सत्यमेतद्ब्रवीमि ते।
सततं महितो देव्याः शच्याः स हि वरद्रुमः। सर्व्वकामप्रदः कृष्ण तथेन्द्रस्यामितौजसः। ७२००
|| वासुदेव उवाच || मुने तेन कृतं साधु महादेवेन धीमता। यच्छचोकारणं कृत्वा न नीतः स तरुः पुरा।
स ज्येष्ठः सर्व्वभूतानां लोककृत्प्रभवोऽव्ययः। परावर्य्यस्य सद्भावं कृतवानिति मे मतिः।
अहं यवीयान् देवस्य सर्व्वथा बलघातिनः। लालनीयश्च भगवन् जयन्त इव मत्तम।
सर्व्वथा भगवांस्तावदुपायैर्ब्बहुविस्तरैः। करोतु यत्नं प्रोत्यर्थं भक्तो ह्यसि तपोधन।

मया मुने प्रतिज्ञातं पुण्यार्थं सत्यभामया । स्वर्गादिहानयिष्यामि पारिजातमिति प्रभो ।
मया तदनृतं शक्यं कथं कर्त्तुं तपोधन । नानृतं हि वचो विप्र प्रोक्तपूर्व्वं मयाऽनघ ।
मयि भग्नप्रतिज्ञे हि लोकानां संक्षयो भवेत् । मन्मया हि मुनिश्रेष्ठ लोका धर्म्मगुणान्विताः ।
परिधार्य्याः स्थिता सर्व्वे स कथं ह्यनृतं वदेत् ।
न देवगन्धर्व्वगणा न राक्षसा न चासुरा नैव च यक्षपन्नगाः । मम प्रतिज्ञामुपहन्तुमुद्यताः सुखाय जीवन्ति चिरं महा मुने ।
स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवताऽमरेश्वरः । ततः शचीव्यामृदितानुलेपने गदां विमोक्ष्यामि पुरन्दरोरसि ।
इति प्रवाच्यो यदि सामपूर्व्वकं प्रयाच्यमानो न तरुं प्रयच्छति । सुनिश्चयं मद्गमनाय सर्व्वथा त्वयाऽपि कार्य्यः खलु तत्र निश्चयः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे सप्तविंशत्यधिकशतोऽध्यायः ॥ १२७ ॥

॥ वैशम्पायन उवाच ॥ नारदोऽथ मुनिर्गत्वा महेन्द्रसदनं नृप । तां रात्रिमवसत्तत्र ददृशे च महोत्सवं ।
तत्रादित्या महात्मानो वसवश्च सुरोत्तमाः । राजर्षयश्च विद्वांसः स्वर्गताः कर्म्मभिः शुभैः ।
नागा यक्षाश्च सिद्धाश्च चारणाश्च तपोधनाः । ब्रह्मर्षयश्च शतशो देवर्षिमनवस्तथा ।
सुपर्णाश्च महात्मानो मरुतश्च महाबलाः । दिवौकसां निकायाश्च शतशोऽन्ये समागताः ।
उपर्य्युपरि सर्व्वेषां सोमो देवो महेश्वरः । तस्थावमितविक्रान्तः स्वैर्गणैः परिवारितः
देवर्षिभिर्म्मुनिश्रेष्ठैः संवृतः सर्व्वभावनः । कल्पान्तरसहस्रेषु क्षयो येषां न विद्यते ।
यानर्च्चयन्ति सततं देवा देवेश्वरोपमाः । आत्मज्ञाः सत्यसन्धाश्च ये च धर्म्मपथे स्थिताः ।
रुद्राश्च काश्यपा देवमभ्युपासन्त भारत । स्कन्दश्च भगवान् रौद्रिर्गङ्गा च सरितांवरा ।
अर्च्चिष्मांस्तुम्बुरुश्चैव भारिश्च वदतांवरः । नेतारो देवदेवानामेते हि तपसाऽन्विताः ।
एताननुविधीयन्ते देवान्देवगणा नृप । धर्म्मनित्यास्तपोनित्याः सन्तः सन्मार्गमाश्रिताः ।
ये त्विमे मानुषा देवानर्च्चयन्ति शुभार्थिनः । तानर्च्चयन्ति ह्यमरास्तथा राजञ्छुभार्थिनः ।
पितृकृत्येषु देवानां संन्यासं येऽप्यनुष्ठिताः । स्वाध्यायवन्तः कौरव्य सततं धर्म्मचारिणः ।
गन्धर्व्वाधिपतिः श्रीमांस्तत्र चित्ररथो नृप । सपुत्त्रो वादयामास देववाद्यानि हृष्टवत् ।
ऊर्णायुश्चित्रसेनश्च हाहाहूहूश्च भारत । तुम्बरस्तुम्बुरुश्चैव जगुरन्ये च सद्गुणान् ।
उर्व्वशी पूर्व्वचित्तिश्च हेमा रम्भा च भारत । हेमदन्ता घृताची च सहजन्या तथैव च ।
जुजोष भगवान्देवस्तदुपस्थानमात्मवान् । वृत्तेन तुष्टः शक्रस्य जगाम जगतो गतिः ।
गते भूतपतौ सर्व्वे नृपा जग्मुर्यथागतं । महेन्द्रेणार्च्चिता देवाः स्वान्येव निलयान् गताः ।
ततः सर्व्वेषु यातेषु सुखासीनं पुरन्दरं । सदस्यैः स्वैः सहासीनं नारदोऽभिययौ मुनिः ।
तमिन्द्रः पूजयामास समुत्थाय तपोधनं । दिदेश कुशगर्भञ्च पीठमात्मासनोपमं ।

नारदोऽथ महातेजा महेन्द्रमिदमब्रवीत् । दूतोऽहममरश्रेष्ठ विष्णोरतुलतेजसः ।
किञ्चित् कार्य्यं पुरस्कृत्य प्रेषितोऽहं महात्मना । आनर्त्तादार्त्तिहरणं तथैवानन्यतेजसः ।
प्रीतिवाक्यानि हृद्यानि प्रयुज्य मुनये तदा । ततः प्रहृष्टो भगवानब्रवीत् पाकशासनः ।
किमाह पुरुषश्रेष्ठः शीघ्रमाचक्ष्व मे मुने । चिरस्य खलु कृष्णेन संस्मृतोऽस्मि महात्मना ।
प्रियवाक्यानि हृद्यानि ब्रूहि धर्म्मभृताम्वर । ७१३५
॥ नारद उवाच ॥ महेन्द्रेन्द्रानुजं द्रष्टुं गतोऽहं भ्रातरं तव । द्वारकां पुरुषश्रेष्ठ काश्यपानां यशस्करं ।
तन्तु रैवतकेऽद्राक्षं तदासीनमरिन्दमं । रुक्मिण्या सहितं वीरमुमयेव वृषध्वजं ।
पारिजाततरोः पुष्पं तस्य दत्तं मयाऽनघ । विस्मापनार्थं देवेश पद्मोनामुरुतेजसः ।
तद्दृष्ट्वा तस्य पत्न्यस्तु विस्मयं परमं ययुः । बहुकामप्रदं पुष्पं वृक्षराजसमुद्भवं ।
गुणास्तासां मयाख्यातास्तस्य पुष्पस्य मानद । सृष्टिश्च पारिजातस्य कश्यपेनातितेजसा । ७१४०
अदित्या कश्यपो दत्तः पुण्यार्थेश्च यथा मम । पुष्पदाम्ना वेष्टयित्वा कण्ठे पुण्यार्थमात्मवान् ।
तस्य दत्तो यथा शच्या देवास्त्वन्ये सुरेश्वर । निष्क्रयश्च यथा दत्तः कश्यपाद्यैर्महर्षिभिः ।
तच्छ्रुत्वा तस्य पत्न्येका सत्यभामेति विश्रुता । पुण्यकार्य्यं मनश्चक्रे दयिता ते यवीयसः ।
तया चाभ्यर्थितो भर्त्ता देव्या देवमयेश्वर । प्रतिजज्ञे स धर्म्मात्मा यवीयांस्तव मानद ।
ततो मामुक्तवान् वीरो विष्णुर्बलवताम्वरः । यथावत् सुरमुख्येश ब्रुवतः शृणु भावन । ७१४५
लालनीयो यवीयांस्तु प्रणिपत्याच्युतोऽब्रवीत् । आनायय सुरश्रेष्ठ पारिजातं वरद्रुमं ।
मनोरथोऽस्तु सफलो बध्वास्तेऽसुरनाशन । धर्म्मकृत्यं विशेषेण बध्वास्तेऽमरसत्तम ।
अयं दुर्लभकल्याणो लोको लोकमयेश्वर । पश्यन्त्वमरकल्याणं मत्प्रभावाच्च मानुषाः ।
॥ वैशम्पायन उवाच ॥ वासुदेववचः श्रुत्वा महेन्द्रः कुरुनन्दन । नारदं वदतां श्रेष्ठमिदं वाक्यमथाब्रवीत् ।
भजासनं द्विजश्रेष्ठ श्रुतमुक्तं त्वया द्विज । सन्देशं प्रतिदास्यामि विष्णोरतुलतेजसः । ७१५०
आसीने नारदे शक्रो लब्धानुज्ञोऽथ नारदात् । स्वमासनवरं भेजे तथैव सदृशं विभो ।
उपविष्टः सुरपतिरथोवाच तपोधनं । निरीक्ष्य सदसं वीर्य्यं पार्षदं वृत्रनाशनः ।
॥ इन्द्र उवाच ॥ मद्वर्षे कुशलं पृष्ट्वा वक्तव्यो जनार्द्दनः । वचनान्मम धर्म्मज्ञ सर्व्वभूतसुखावहः ।
मदनन्तरमीशस्त्वं जगतो नात्र संशयः । त्वदीयः पारिजातश्च रत्नान्यन्यानि चाच्युत ।
त्वन्तु भारावतरणं कर्त्तुं देव मर्हीं गतः । मानुष्यं सर्व्वकृत्यानामाश्रितः कार्य्यसिद्धये । ७१५५
त्वयि तीर्णप्रतिज्ञे हि पुनः प्राप्ते त्रिविष्टपं । पूरयिष्यामि बध्वास्ते दृष्टान् कामानधोक्षज ।
न कर्त्तव्यानि रत्नानि नयितव्यानि तेऽच्युत । स्वल्पार्थे मानुषं लोकमिति पूर्व्वकृता स्थितिः ।
कल्पस्य हि स्थितिं देव प्रवर्त्तासि महाभुज । यद्यहं किं प्रवक्ष्यन्ति प्रजापतिगणाः प्रभो ।
ब्रह्मणा स्वपुत्रेण रूपोत्सेध महात्मना । नियमाः सर्व्वकृत्यानां स्थापिता भवतो भुवाः ।
प्रजापतिकृतं मार्गमपास्य भजतो मम । श्रुत्वा प्रजापतिर्ब्रह्मा मामुपालभेत् प्रभुः । ७१६०

अस्माभिर्भिद्यमानन्तु मर्य्यादासेतुबन्धनं। भेत्स्यन्त्यशङ्किता दैत्या दैत्यपक्षास्तथाऽपरे।
स्त्रीनिमित्तमितो नीते पारिजाते द्रुमेश्वरे। स्वर्गौकसो भविष्यन्ति विमनस्काश्च मानद।
उपभोगा मानुष्याणां विहिता ये स्वयम्भुवा। तैस्तुष्यतु मम भ्राता सम्पश्यन् कालपर्य्ययं।
इहापि तावत्त्रिदिवे मम यः स्यात् परिग्रहः। त्रिदिवस्थोऽपि तं कृष्णो नोपभोक्तुमिहार्हति।
ज्येष्ठज्यायिष्ठभोगानां नाभिज्ञः किं जनार्द्दनः। यतो धर्म्मं समुत्सृज्य पापमेवानुवर्त्तते। ७१६५
स्त्रीवश्यता ख्याप्यमाना कृष्णस्य हि महात्मनः। जगत्ययशसा योगं जनयेदिति मे मतिः।
मानुष्यं मानुषे प्राप्तो यदेतन्मधुसूदनः। कुर्य्यान्निर्ब्बन्धनीयं यद्भ्राता ज्येष्ठेन नारद।
स्वर्गरत्नविलोपेन धर्षणा स्यात् परा मम। ज्ञातितो धर्षणा चैव विशेषेणैव गर्हिता।
धर्म्ममर्थञ्च कामञ्च क्रमेण मधुसूदनः। सेवतेष सतां धर्म्मान् स्थापितान् पद्मयोनिना।
महीतलं पारिजातं नाययिष्याम्यहं यदि। पौलोमीमादितः कृत्वा को नु मां बहुमंस्यते। ७१७०
पारिजातं महीपृष्ठे दृष्ट्वा स्पृष्ट्वा च मानुषाः। स्वर्गार्थं नोद्यमिष्यन्ति दृष्ट्वा स्वर्गफलं क्षितौ।
पारिजातगुणान्मर्त्त्या जुषन्ति यदि नारद। देवानां मानुषाणाञ्च न विशेषो भविष्यति।
तत्र यत् क्रियते कर्म्म इह तद्भुज्यते नरैः। स्वर्गार्थं न यतिष्यन्ति पारिजातगुणान्विताः।
सर्व्वरत्नवरः स्वर्गे पारिजातस्तपोधनः। भुज्यते यदि मर्त्त्यैः स सर्व्वमेकं जगद्भवेत्।
यज्ञैर्मर्त्त्या न यक्ष्यन्ति लब्धस्वर्गफला भुवि। न पूर्त्तानि प्रदास्यन्ति तुल्यत्वममरैर्गताः। ७१७५
यज्ञैर्जप्याह्निकैश्चैव नित्यमाप्याययन्ति नः। मानुषाः स्वर्गमिच्छन्तः श्रद्दधानास्तपोधन।
तत् सर्व्वं न करिष्यन्ति पारिजातगुणान्विताः। निस्तेजसो भविष्यामस्ते गतास्त्रिदिवौकसः।
इतः सुवृष्ट्या प्रस्थैस्ते जीवन्ति पुरुषा भुवि। आप्याययन्ति तेऽप्यस्मान्दानैर्यज्ञैस्तथैव च।
न बुभुक्षा पिपासा वा बाधते मानुषान् यदि। रोगो जरा वा धर्म्मज्ञ मृत्युर्व्वा रतिरेव वा।
दौर्गन्ध्यं वाऽथ वा घोरा ईतयः कर्म्मसम्भवाः। किमुद्योगं करिष्यन्ति पारिजातगुणान्विताः। ७१८०
सर्व्वथा नयनं तत्र पारिजातस्य न क्षमं। इति वाच्यस्त्वया विप्र विष्णुरक्लिष्टकर्म्मकृत्।
यथा यथा च मे भ्राता तुष्येत द्विपदाम्बर। तथा तथा त्वया कार्य्यं कार्य्यं मत्प्रीतिमिच्छता।
हारांश्च मणिरत्नानि चन्दनान्यगुरूणि च। वस्त्राणि च विचित्राणि वधूनां द्वारकां नय।
योग्यानि मर्त्त्यलोकानां यावदिच्छति केशवः। न स्वर्गपरिभोगन्तु कर्त्तुमर्हति केशवः।
ददानि रत्नानि यथेप्सितान्यहं बहूनि चित्राणि च भूषणानि। न पारिजातञ्च कथञ्चन द्रुमं मुने प्रदास्यामि दिवौकसां
प्रियं। ७१८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे इन्द्रवाक्ये अष्टाविंशत्यधिकशततोऽध्यायः ॥ १२८ ॥

॥ वैशम्पायन उवाच ॥ देवराजवचः श्रुत्वा नारदः कुरुनन्दन। प्रोवाच वाक्यं वाक्यज्ञो महात्मा धर्म्मवित्तमः।
अवश्यमेव वक्तव्यं हितं बलनिसूदन। मया तव महाबाहो बहुमानोऽस्ति मे त्वयि।
उक्तो मया वासुदेवो जानता भवतो मतं। न दत्तः पारिजातो हि हरस्यापि त्वया पुरा।

हेतवश्च मया तस्य दर्शिता भोः समासतः। न चावगतवान्देवः सत्यमेतद्ब्रवीमि ते।
उपेन्द्रोऽहं महेन्द्रेण लालनीयः सदति मां। उवाच पुण्डरीकाचस्तदनन्त रमेव च। ७२९०
पुनः पुनर्मया चास्य हेतवो देव दर्शिताः। नैव बुद्धिस्य व्यावृत्ता वृत्रनाशन तस्य वै।
अपि चाप्युक्तवान्देवो वाक्यान्ति मधुसूदनः। प्रहस्य पुरुषश्रेष्ठः सरोषमिव वासव।
न देवगन्धर्व्वगणा न राचसा न चासुरा नैव च पन्नगोत्तमाः। मम प्रतिज्ञामपहन्तुमुद्यता मुने समर्थाः खलु भद्रमस्तु ते।
स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवताऽमरेश्वरः। ततः शचीव्यास्तदितानुलेपने गदां विमोच्यामि पुरन्दरोरसि।
उपेन्द्रस्य महेन्द्रायं भ्रातुस्ते निश्चयः परः। यद्च मन्यसे न्याय्यं संप्रधार्य्य कुरुष्व तत्। ७२९५
तत्त्वं हितश्च देवेश श्रूयतां वदतो मम। नयनं पारिजातस्य द्वारकां मम रोचते।
नारदेनैवमुक्तस्तु प्रत्यवंबलदेहभृत्। रोषाविष्टो देवराजः सहस्राचोऽब्रवीदिदं।
अनागसि मयि ज्येष्ठे सोदरे यदि केशवः। एवं प्रवृत्तः किं शक्यं कर्त्तुमद्य तपोधन।
बहूनि प्रतिलोमानि पुरा स कृतवान्मयि। कृष्णो नारद सोढानि भ्रातेति स मयाऽनघ।
खाण्डवे चार्ज्जुनरथं पुरा वाहयता सता। मदीया वारिता मेघाः शमयन्तोऽग्निमुद्धतं। ७३००
गोवर्द्धनं धारयता विप्रियश्च कृतं मम। तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया।
समोऽहमिति सर्व्वेषां भूतानामिति चोक्तवान्। स्वबाहुबलमाश्रित्य वृत्रस्य निहतो मया।
देवासुरेषु प्राप्तेषु संग्रामेषु च नारद। युध्यत्यात्मेच्छया कृष्णो मुने सुविदितं तव।
बहुनाऽत्र किमुक्तेन तस्मादिच्छा प्रवर्त्ततां। ज्ञातिभेदो न नः कार्य्यः साची त्वं मम नारद।
ममोरसि गदां मोक्तुं प्रोद्यतो यदि केशवः। अनुशब्द्याथ पौलोमीं गुणः क इह दृश्यते। ७३०५
उदवासं गतो धीमान् पिता नः कश्यपः प्रभुः। अदित्या सह मे माता तयोर्व्वाच्यमिदं भवेत्।
अजितात्मा मम भ्राता रजसा तमसा वृतः। कामेन च स्त्रियो वाक्यादेवं मामुक्तवान् गुरुं।
धिक् स्त्रियं सर्व्वथा विप्र धिग्जो धिक् तमस्तथा। यत्राधिचिप्तवान् विष्णुरेवं मां स्त्रीजितो द्विज।
न दृष्टं कश्यपकुलं व्यपदेश्यं महामुने। नैव दचकुलं दृष्टं मातुर्मे यत्र सम्भवः।
न ज्येष्ठता न राजत्वं देवानां प्रतिमानितं। कामरागाभिभूतेन कृष्णेन खलु नारद। ७३१०
पुत्रदारसहस्रैर्हि भ्राता ऽनघ विशिष्यते। सद्वृत्तो ज्ञानसम्पन्न इति ब्रह्मा पुरा ऽब्रवीत्।
नास्ति भ्रातृसमो बन्धुराहार्य्य इतरो जनः। इति मामब्रवीन्माता पिता चैव प्रजापतिः।
सोदरेषु विशेषन्तु पिता मे कश्यपो ऽब्रवीत्। दृष्टा मया विरुध्यन्तो दानवाः पापनिश्चयाः।
काममेतन्न वक्तव्यं स्वयमात्मस्तवान्वितं। प्राप्तस्त्ववसरो विप्र यदिहाद्योच्यते मया।
धनुर्व्वाचायां मुनिश्रेष्ठ क्रियायां हि पुराऽनघ। धन्याभिरमराणां हि वरदानान्महामते। ७३१५
उत्कृत्तशिरसो विष्णोः पुरा देहो धृतो मया। सन्धितञ्च शिरो यस्माच्छिन्नं रौद्रेण तेजसा।
अहं विशिष्टो देवानामित्युक्ता पुनरच्युतः। धनुरारोप्य दर्पेण स्थितो नारद केशवः।

किं मां पिता वा माता वा वक्ष्यतीति मया मुने। स्नेहेन विष्टतं विष्णोः शरीरं मुनिसत्तम।
ऐन्द्रं वैष्णवमस्यैव मुने भागमहं ददौ। यवीयासमहं प्रेम्णा कृष्णं पश्यामि नारद।
संग्रामेषु प्रवर्त्तव्यं तेन पूर्व्वं तपोधन। राजा किलाहं समरे प्रहराम्यतो ध्रुवं। ७११०
प्रादुर्भावेषु सर्व्वेषु स्वशरीरमिवानघ। यत्नाद्रक्ष्यामि धर्म्मज्ञ केशवं भक्तिमाश्रितं।
इदं भंक्ता मदीयञ्च भवनं विष्णुना कृतं। उपर्य्युपरि लोकानामधिकं भुवनं मुने।
अवमानः स च मया पृष्ठतः क्रियते मुने। लालनीयो मया बाल इत्येवं भ्रातृगौरवात्।
बालोऽयं मम पुत्त्रेति यवीयानिति नारद। पित्रा मात्रा च गोविन्दो नातीव परिभाषितः।
दृष्टस्तत्र जनन्यास्तु केशवः स विशेषतः। वयं द्वेष्या न सन्देहस्तत्र स्नेहो ऽतिरिच्यते। ७११५
सर्व्वज्ञो बलवान् शूरो मान्यमानयिता तथा। केशवेत्येव च ध्यानं यत्तद्वितयतां गतं।
गच्छ नारद वक्तव्यः केशवो वचनान्मम। आहूतो न निवर्त्तेयं समरं प्रति शत्रुभिः।
यदीच्छसि तदागच्छ सद्यं ते यत्त्वमिच्छसि। प्रहरस्व च पूर्व्वं त्वं भार्य्याजित यथेच्छसि।
रथाङ्गेनाथ शार्ङ्गेण गदया नन्दकेन च। प्रहरारुह्य गरुडं दृढो भूत्वा जनार्द्दन।
प्रहृते प्रहरिष्यामि यथाशक्त्या च केशव। अहो धिग्यदि मां स्नेहो विक्लवं न करिष्यति। ७१२०
यावन्न संग्रामगतो जितोऽहं चक्रपाणिना। पारिजातं न दास्यामि तावद्वो मुनिसत्तम।
मां समाह्वयते ज्येष्ठं यवीयांस्तु तपोधन। अहं तं मर्षयिष्यामि किमर्थं त्वोजितं हरिं।
अद्यैव गच्छ भगवन् द्वारकां कृष्णपालितां। विवादे संस्थितः सोऽद्य इति वाच्यस्त्वयाऽच्युतः।
पलाशपत्रार्द्धमपि त्वया ऽजितो न पारिजातस्य तव प्रदास्यति। इति प्रवाच्यो मधुसूदनस्त्वया वचो मदीयं स्मरता तपोधन।
पुनः प्रवाच्यो भगवंस्त्वयाऽच्युतो मम प्रियार्थं खलु निर्विशङ्कितं। न मायया हर्त्तुमिहार्हसि द्रुमं सुयुद्धमेवास्तु धिगस्तु जिह्मतां। ७१२५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे इन्द्रवाक्ये ऊनत्रिंशदधिकशततोऽध्यायः ॥ १२९ ॥

॥ वैशम्पायन उवाच ॥ महेन्द्रवचनं श्रुत्वा नारदो वदताम्वरः। विविक्ते देवराजानमिदं वचनमब्रवीत्।
कामं प्रियाणि राजानो वक्तव्या नात्र संशयः। प्राप्तकालन्तु वक्तव्यं हितमप्रियमच्युत।
अनियुक्तपुरोभागो न स्यादिति वदन्ति हि। स लोकगतितत्त्वज्ञो नयविज्ञानकोविदः।
कार्य्याकार्य्ये समुत्पन्ने परिपृच्छति मां भवान्। यतस्ततः प्रवक्ष्यामि श्रूयतां यदि रोचते।
अयुक्तेनापि सुहृदा वक्तव्यं जानता हितं। न्याय्यञ्च प्राप्तकालञ्च पराभवमनिच्छता। ७१३०
वक्तव्यं सर्व्वथा सद्भिरप्रियं वाऽपि यद्धितं। आनृण्यमेतत् स्नेहस्य सद्भिश्च विहितं पुरा।
अनृते धर्म्मभङ्गे च न शुश्रूषति चाप्रिये। न प्रियं न हितं वाच्यं सद्भिरेते विनिन्दिताः।
सर्व्वथा देव वक्तव्यं श्रूयतां शृण्वताम्वर। श्रुत्वा च कुरु सर्व्वज्ञ मम श्रेयस्करं वचः।
अन्योन्यभेदो भ्रातॄणां सुहृदां वा बलान्तक। भवत्यानन्दकृद्देव द्विषतां नात्र संशयः।

हितानुबन्धयहितं कार्य्यं श्रेयं सुरेश्वर। विपरीतञ्च तद्बुद्ध्वा नित्यं बुद्धिमतां वर।
पश्चात्तापकरं यत् स्यादारब्धं कार्य्यमीदृशं। आरम्भेनैव तद्विद्यानेष बुद्धिमतां नयः।
विपाकमस्य कार्य्यस्य नानुपश्यामि शोभनं। यदत्र कारणं देव निबोध विबुधाधिप।
य एको विश्वमध्यास्ते प्रधानं जगतो हरिः। प्रकृत्या यं परं सर्व्वे चेत्रज्ञं वै विदुर्बुधाः।
तस्याव्यक्तस्य यो व्यक्तो भागः सर्व्वभवोद्भवः। तस्यात्मा प्रथमो देवो विष्णुः सर्व्वस्य धीमतः।
प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी। व्यक्तः सर्व्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः
रुक्मिण्याद्याः स्त्रियस्तस्य व्यक्तत्वे प्रथमो गुणः। अव्यया प्रकृतिर्द्देवी गुणदेवो महेश्वरः।
न विशेषोऽस्ति रुद्रस्य विष्णोश्चामरसत्तम। गुणिनश्चाव्ययायाश्च स दारप्रथमो गुणः।
नारायणो महातेजाः सर्व्वलोकभावनः। भोक्ता महेश्वरो देवः कर्त्ता विष्णुरधोक्षजः।
ब्रह्मा देवगणाश्चान्ये पश्चात् सृष्टा महात्मना। महादेवेन देवेश प्रजापतिगणास्तथा।
एवं पुराणः पुरुषो विष्णुर्वेदेषु पठ्यते। अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा।
अदित्या तपसा विष्णुर्म्महात्माराधितः पुरा। वरेण च्छन्दिता तेन परितुष्टेन चादितिः।
तयोक्तस्त्वत्समं पुत्त्रमिच्छामीति सुरोत्तम। प्रणिपत्य च विज्ञाय नारायणमधोक्षजं।
तेनोक्ता भुवने नास्ति मत्समः पुरुषोऽपरः। अंशेन तु भविष्यामि पुत्त्रः स्वल्वहमेव ते।
स जातः सर्व्वलद्देवो भ्राता तव सुरेश्वर। नारायणो महातेजा यमुपेन्द्रं प्रचक्षते।
इत्यमेष हरिर्द्देवः काश्यपत्वमुपागतः। तैस्तैर्भावैर्विकुरुते भूतभव्यभवाव्ययः।
प्रादुर्भावं गतो देवो जगतो हितकाम्यया। माथुरं जगतां नाथः कर्त्ता हर्त्ता च केशवः।
यथा पललपिण्डः स्याद्व्याप्तः स्नेहेन मानद। तथा जगदिदं व्याप्तं विष्णुना प्रभविष्णुना।
ब्रह्मण्यदेवः सर्व्वात्मा तैस्तैर्भावैर्विकुर्व्वते। जगत्यतिगुणो देवो वैकुण्ठः सर्व्वभावनः।
अतः समस्तदेवानां पूज्य एव च केशवः। पद्मनाभश्च भगवान् प्रजासर्गकरो विभुः।
अनन्तो धारणार्थञ्च विभर्त्ति च महद्यशः। यज्ञ इत्यपि सद्भिश्च कथ्यते वेदवादिभिः।
श्वेतः कृतयुगे देवो रक्तस्त्रेतायुगे तथा। द्वापरे च तथा पीतः कृष्णः कलियुगे विभुः।
अवधीत् स हिरण्याक्षं दिव्यरूपधरो हरिः। जघ्ने हिरण्यकशिपुं नरसिंहवपुर्हरिः।
दधाराप्सु निमज्जन्तीमेष देवो वसुन्धरां। वाराहं वपुराश्रित्य जगतो हितकाम्यया।
जिगाय जगतीञ्चैव विष्णुर्वामनरूपधृक्। बबन्ध च बलिं देवः श्रीमान् पन्नगबन्धनैः।
देवदानवसम्भूतामकामयदपि श्रियं। त्वय्यनन्तः पुरा विष्णुरुदारामितविक्रमः।
सावशेषं ततो यस्य तं न हन्ति जनार्द्दनः। अनीकेष्वपि वर्त्तन्तं व्रतमेतन्महात्मनः।
जघ्ने च दानवान्मुख्यान्देवानाञ्चैव शत्रवः। तव प्रियार्थं गोविन्दो धर्म्मनित्यः सतां गतिः।
रामत्वमपि चावाप्य जघ्ने रावणमात्मवान्। भूत्वा कामगुणश्चैव जघान द्विरदं हरिः।
हिताय जगतोऽद्यापि लोके वसति मानुषे। उपेन्द्रो जगतो नाथः सर्व्वभूतोत्तमोत्तमः।

जटी कृष्णाजिनी दण्डी दृष्टपूर्व्वो मया हरिः । दैतेयेषु चरन्देवस्तृणेष्वग्निरिवोद्धतः । ७३७५
अद्राक्षमपि गोविन्दं दानवैकार्णवं जगत् । कुर्व्वाणं दानवैर्हीनं जगतो हितकाम्यया ।
अवश्यं पारिजातन्ते नयिष्यति जनार्द्दनः । दारकाममरश्रेष्ठ नानृतं ते ब्रवीम्यहं ।
भ्रातृस्नेहाभिभूतस्त्वं कृष्णे न प्रहरिष्यसि । नापि कृष्णस्त्वयि ज्येष्ठे प्रहरिष्यति वासव ।
नैव चेच्छ्रोष्यसि प्रोक्तं मया देव कथञ्चन । पृच्छ त्वं नयधर्म्मज्ञान् ये हितास्तव मन्त्रिणः ।
नारदेनैवमुक्तस्तु महेन्द्रो जनमेजय । इदमुत्तरमीशोऽथ प्रत्युवाच जगद्गुरुं । ७३८०
एवंविधप्रभावं त्वं कृष्णं वदसि यद्द्विज । एवमेतत् सुबहुशः श्रुतं खलु मया मुने ।
यतश्चैवंविधः कृष्णस्ततोऽहं तस्य तं तरुं । न प्रयच्छाम्यदातव्यं सतां धर्म्ममनुस्मरन् ।
महाप्रभावो नात्यार्थे स्थेयादिति विचिन्तयन् । व्यवस्थितोऽहं भद्रन्ते मुने सर्व्वगुणोदितः ।
महाप्रभावाः सततं भवन्ति हि सहिष्णवः । श्रोतारश्चैव सततं वृद्धानां ज्ञानचक्षुषां ।
महात्मा कारणेनाल्पे कृष्णो धर्म्मभृताम्वरः । भ्रात्रा ज्येष्ठेन धर्म्मज्ञो विरोधं गन्तुमर्हति । ७३८५
यथैव मम मातुः स वरं प्रादादधोक्षजः । तथैव तस्याः पुत्त्राणां ज्येष्ठतां सोढुमर्हति ।
यथैवोपेन्द्रतां यातः स्वयमिच्छन् जनार्द्दनः । तथैव भ्रातुरिन्द्रस्य संमानं कर्त्तुमर्हति ।
ज्यैष्ठ्यमेव तु देवेन नारब्धं किं पुरातने । अथेदानीमपीच्छेत् स ज्येष्ठोऽस्तु मधुसूदनः ।
सुनिश्चितं बलरिपुमीक्ष्य नारदो विसर्ज्जितस्त्रिदशवरेण धर्म्मवित् । ययौ पुरीं यदुवृषभाभिरक्षितां कुशस्थलीं धृतमतिमांस्तपोधनः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे त्रिंशदधिकशतोऽध्यायः ॥ १३० ॥

॥ वैशम्पायन उवाच ॥ अथैत्य द्वारकां रम्यां नारदो मुनिसत्तमः । ददर्श पुरुषश्रेष्ठं नारायणमरिन्दमं । ७३९०
स्ववेश्मनि सुखासीनं सहितं सत्यभामया । विराजमानं वपुषा सर्व्वतेजोतिगामिना ।
तमेवार्थं महात्मानं चिन्तयन्तं दृढव्रतं । केवलं योजयन्तञ्च वाक्यमात्रेण भामिनीं ।
दृष्ट्वैव नारदं देवः प्रत्युत्तस्थावधोक्षजः । पूजयामास च तथा विधिदृष्टेन कर्म्मणा ।
सुखोपविष्टं विश्रान्तं प्रहस्य मधुसूदनः । वृत्तान्तं परिपप्रच्छ पारिजाततरुं प्रति ।
अथोवाच मुनिः सर्व्वं विस्तरेण महात्मने । इन्द्रानुजायेन्द्रवाक्यं निखिलं जनमेजय । ७३९५
श्रुत्वा कृष्णस्तु तत्सर्व्वं नारदं वाक्यमब्रवीत् । अमरावतीं पुरीं यास्ये श्वोऽहं धर्म्मभृताम्वर ।
इत्युक्त्वा नारदेनैव सहितः सागरं ययौ । सन्दिदेश ततस्तत्र विविक्ते नारदं हरिः ।
महेन्द्रभवनं गत्वा वद वाक्यं तपोधन । अभिवाद्य महात्मानं मद्वाक्यादमरोत्तमं ।
न युद्धे प्रमुखे स्थातुमर्हसि त्वं मम प्रभो । पारिजातस्य नयने निश्चितं त्वमवेहि मां ।
एवमुक्तस्तु कृष्णेन नारदस्त्रिदिवं गतः । आचचक्षे च कृष्णोक्तं देवेन्द्रायामितौजसे । ७४००
ततो वृहस्पतेः शक्रः शशंस बलनाशनः । श्रुत्वा वृहस्पतिश्चेदमुवाच कुरुनन्दन ।
अहो धिग्ब्रह्मसदनं मयि याते शतक्रतो । दुर्नीतमिदमारब्धं मन्त्रभेदो हि दारुणः ।

अनाख्याय कथं नाम भवता भुवनेश्वर। ममैतत् कृत्यमारब्धं देव केनापि हेतुना।
अथवा भवितव्येन कर्म्मजेन प्रयुज्यते। जगद्‌वृत्तन्न विधिः शक्यः समतिवर्त्तितुं।
सहसैव तु कार्य्याणामारम्भो न प्रशस्यते। तदेतत् सहसारब्धं कार्य्यं दास्यति लाघवं। ७४०५
वृहस्पतिं महात्मानं महेन्द्रोऽथाब्रवीद्वचः। एवं गतेऽस्य यत् कार्य्यं तद्भवान् वक्तुमर्हति।
तमुवाचाथ धर्म्मात्मा गतानागततत्त्ववित्। अधोमुखश्चिन्तयित्वा वृहस्पतिरुदारधीः।
यत्नस्व सह पुत्रेण योधयस्व जनार्द्दनं। तथा शक्र करिष्यामि यथा न्याय्यं भविष्यति।
वृहस्पतिस्त्वेवमुक्त्वा क्षीरोदं सागरं गतः। आचष्ट चैव मुनये कश्यपाय महात्मने।
तच्छ्रुत्वा कश्यपः क्रुद्धो वृहस्पतिमभाषत। अवश्यं भाव्यमेतद्धि सर्व्वथा नात्र संशयः। ७४१०
दुष्कृतः सदृशीं भार्य्यां भर्त्तुर्वैदेवशर्म्मणः। अपध्यानकृतो दोषः पतत्येष शतक्रतोः।
अस्य दोषस्य शान्त्यर्थमारब्धस्य मुने मया। उदवासः स दोषस्य प्राप्त एव सुदारुणः।
तद्गमिष्यामि मात्राऽस्य महादित्या तपोधन। उभौ तौ वारयिष्यामि देवं संवदते यदि।
वृहस्पतिस्तु धर्म्मात्मा मारीचमिदमब्रवीत्। प्राप्तकालं त्वया तत्र भवितव्यं तपोधन।
तथेति कश्यपश्चोक्त्वा सम्प्रस्थाप्य वृहस्पतिं। जगामार्च्चयितुं देवं रुद्रं भूतगणेश्वरं। ७४१५
तत्र सौम्यं महात्मानमानर्च वृषभध्वजं। वरार्थी कश्यपो धीमानदित्या सहितः प्रभुः।
तुष्टाव च तमीशानं मारीचः कश्यपस्तदा। वेदोक्तैः स्वकृतैश्चैव स्तवैः स्तव्यं जगद्गुरुं।
॥कश्यप उवाच॥ उरुक्रमं विश्वकर्म्माणमीशं जगत्स्रष्टारं धर्म्मदृश्यं वरेश्यं। सशर्व्वं त्वां धृतिमद्धाम दिव्यं विश्वेश्वरं भगवन्तं नमस्ये।
यो देवानामधिपः पापहर्त्ता ततं विश्वं येन जगन्महत्त्वात्। आपो गर्भो यस्य शुभा धरित्र्यो विश्वेश्वरं तं शरणं प्रपद्ये।
शालावृकान् यो यतिरूपो निजघ्ने दत्तानिन्द्रेण प्रणुदोऽहितानां। विरूपाक्षं सुदर्शनं पुण्ययोनिं विश्वेश्वरं यामि मूर्द्ध्ना प्रपद्ये। ७४२०
भुङ्क्ते य एको विभुर्ज्जगतो विश्वमग्र्यं धाम्ना धाम सुकृतित्वाच्च धृष्यः। पुष्यात् स मां महता शाश्वतेन सोमपानां मरीचिपानां वरिष्ठः।
अथर्व्वाणं सुशिरसं भूतयोनिं कृतिनं धीरं दानवानाञ्च बाधं। यज्ञे हुतं यज्ञियं संस्कृतं वै विश्वेश्वरेशं शरणं यामि देवं।
जगज्जालं विततं यत्र विश्वं विश्वात्मानं प्रीतिदेवं गतानां। य ऊर्द्ध्वगं रथमास्थाय याति विश्वेश्वरः स सुमना मेऽस्तु नित्यं।
अन्तस्वरं रोचनं चारुशाखं महाबलं धर्म्मनेतारमीड्यं। सहस्रनेत्रं शतवर्त्मानमुग्रं महादेवं विश्वसृजं नमस्ये।
शुचिं योगं शंसनं शान्तपापं शर्व्वं शम्भुं शङ्करं भूतनाथं। धुरन्धरं गोपतिं चन्द्रचिह्नं रिषीकाणामयनं यामि मूर्द्ध्ना। ७४२५
आशुः शिपाणं वृषभं वीरुवाणं कृतं धर्म्मं वितथं चाशु शेवं। वसुन्धरं सम्बुजोकं समं त्वां धृतव्रतं शूलधरं प्रपद्ये।
अनन्तवीर्य्यं धृतकर्म्माणमाद्यं यज्ञस्येशं यजताञ्चाभियाज्यं। हविर्भुजं भुवनानां सदैव ज्येष्ठं द्विजं धर्म्मभृतं प्रपद्ये।
परं गुणेभ्यः प्रश्निगर्भस्वरूपं यशःश्टङ्गं व्यूहनं कान्तरूपं। शुद्धात्मानं पुरुषं सत्यधाम सन्तोहनं दुष्कृतीनां नमस्ये।
युक्तोद्धारं स्वशिरसं चारुकर्म्म दृढव्रतं दृढधन्वानमाजं। शूरं वेत्तारं धनुषोऽस्त्रातिरेकं पतिं पशूनां शमनं नमस्ये।

एको रातिश्चैव भूतं भविष्यं सर्व्वातिथिर्यो हि जुषत्यरिघ्नः। अरिन्तुदोऽनुत्तमः संविभागो विभाजको मां भगवान् पातु देव। ७४३०

य एको याति जगतां विश्वमीशो य एकोऽदान्मरुतां प्राणमग्र्यं। येनानृशंस्याच्छाश्वतं सामजुष्टं समाजुयात् सुकृती श्रेयसेऽद्य।
ब्रह्माऽसृजद्यो भुवनोत्तमोत्तमं तृप्तो विद्वान् ब्राह्मणः षड्गुणस्य। स्रष्टारं सव्याहृतिकं समग्रं समां पायाद्रुम्बकरूपोऽरिहाङ्गैः।
व्यश्नुतो जनोऽथ विद्वान् समग्रः स्तृशिः शम्भुः प्राणदः कृत्तिवासाः। रक्षो भुवः पवमानस्य भर्त्ता स सपत्नीशः शङ्करः सारधाता।
त्र्यम्बकं पुष्टिदं वीरवाणं धर्म्मं विप्राणां वरदं यज्वनाञ्च। बराहरं रणजेतारमीशं देवं देवानां शरणं यामि रुद्रं।
आद्यं देवानामन्तकं दुष्कृतीनां त्रिवृत्सोमं वृत्रहं कर्म्मसाध्यं। भूतायनं भूतपतिं गुरूणां गुरुं देवं शरणं यामि रुद्रं। ७४३५
अनुद्भुतं यज्ञकर्त्तारमन्तं मध्यञ्चाद्यं यज्जगतां साम्यरूपं। देवव्रतेषु बहुधा गीतमीशमभिचित्रिपिष्टपं शरणं यामि रुद्रं।
महाजिनं व्रतिनं मेखलालं सुतोषणं क्रोधघ्नं विपापं। भूतं चेतन्नं गुणिनं वा कपर्द्दिनं नतोऽस्मीशं वन्दनं वन्दनानां।
देवं देवानां पावनं पावनानां कृतिं कृतीनां महतो महान्तं। शतात्मानं संस्तुतं गोपतीनां पतिं देवं शरणं यामि रुद्रं।

अन्तश्चरं पुरुषं गुह्यसंज्ञं प्रभास्वन्तं प्रणवं विप्रदीपं। हेतुं परं परमस्यावरस्य शुभं देवं गुणिनं सन्नतोऽस्मि।
प्रसूतास्तभयो नैप्र सूतिश्च सूक्ष्मः पृथक् भूतेभ्यो न पृथक् चैव भूतः। स्वयम्भूतः पातु मां सर्व्वसादः प्रदः स्वादः सम्मदः पातु रत्नं। ७४४०

आसन्नः सन्नतरः साधकानां श्रद्धावतां श्राद्धवृत्तिप्रणेता। पतिर्गणानां महतां सत्कृतीनां पायान्मेशः पूरणः षड्गुणानां।
अन्तर्व्वहिर्वृजिनानां निहन्ता स्वयं कर्त्ता भूतभावी विकुर्व्वन्। धृतायुधः सुकृतीनामुत्तमौजाः प्रणुद्यान्मे वृजिनं देव देवः।
येनोद्धृतास्त्रैपुरा मायिनो वै दग्धा घोरेण वितथान्ताः शरेण। महत् कुर्व्वन्तो वृजिनं देवतानां ज्यायानीशः पातु विश्वो दधाता।
भागीयसां भागमादातुमिच्छन्मखो दाचो येन कृत्तो ऽभ्यधावत्। विद्वान् यज्ञस्यादिरथान्तः स देवः पायादीशो मां दक्ष्य शान्तहेतुः।
अन्यो धन्यः संस्कृतस्योत्तमस्य जगत् स्रष्टा योऽस्ति सर्व्वातिगुह्यः। स मां मखप्रमुखे पातु नित्यं विचिन्वानः प्रथमः षड्गुणानां। ७४४५
गुणत्रैकाल्यं यस्य देवस्य नित्यं सत्वोद्रिक्तो यस्य भावात् प्रसूतः। गोप्ता गोप्तॄणां सन्नदो दुष्कृतीनामाद्यो विश्वस्य बाधमानस्य क्रुद्धः।
धाम्नो यस्य हरिरग्र्योऽथ विश्वो ब्रह्मा पुत्रैः सहितश्च द्विजाश्च। पराभूता भुवनेशः स सोमो जुषत्वेष श्रेयसे साधुगोप्ता।
यस्माद्भूतानां भूतिरन्तोऽथ मध्यं धृतिर्विभूतिः श्रुतिश्च रुद्रः। महाभिभूतस्य पुरुषस्येश्वरस्य महात्मनो षड्वेद्यस्य तस्य।
यल्लिङ्गाङ्कं त्र्यम्बकः सर्व्वमीशो भगाङ्कं यत्तदुमा सर्व्वधात्री। नान्यत्तृतीयं जगतीहास्ति किञ्चिन्महादेवात् सर्व्वमस्त्वीश्वरोऽसौ।

इति संस्तूयमानस्तु भगवान् वृषभध्वजः। दर्शयामास धर्म्मात्मा काश्यपं धर्म्मस्दहरं। ७४५०
उवाच चैनं देवेशः प्रसन्नेनान्तरात्मना। जाने संतोषि कार्य्येण येन मां त्वं प्रजापते।
इन्द्रोपेन्द्रौ महात्मानौ देवौ प्रकृतिमेष्यतः। पारिजातन्तु धर्म्मात्मा नयिष्यति जनार्द्दनः।

उपध्योता मेहन्द्रो हि मुनिना देवशर्म्मणा । अश्याकाङ्क्षत् पुरा भार्य्यां तपोदीप्तस्य काश्यप ।
गम्यतां तत्र धर्म्मज्ञ दाक्षायण्या सहानया । अदित्या शक्रसदनं श्रेयस्ते पुत्त्रयोर्ध्रुवं ।
इति हरवचनं निशम्य विद्वान् कमलभवात्मजसूनुरप्रमेयः । त्रिदशगणगुरुं प्रणम्य रुद्रं मुदितमनाः सुमनोकसं जगाम ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे महादेवस्तवने एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
॥ वैशम्पायन उवाच ॥ अथ विष्णुर्म्महातेजा मुहूर्त्तेऽभ्युदिते रवौ । मृगयाव्यपदेशेन ययौ रैवतकं गिरिं ।
आरोप्यैकरथे देवः सात्यकिं शिनिपुङ्गवं । प्रद्युम्नमनुगच्छेति प्रोक्ता कुरुकुलोद्वह ।
रैवतस्य गिरं देवो गत्वा दारुकमब्रवीत् । मदीयं रथमेतं त्वं ग्राहयेहैव दारुक ।
प्रतिपालय मां सौम्य दिनार्द्धं चारयन् हरीन् । रथेनैव प्रवेष्टाहं द्वारकां सूतसत्तम ।
इति सन्दिश्य भगवानारुरोह जयोद्यतः । तार्क्ष्यं स सात्यकिं धीमानप्रमेयपराक्रमः ।
पृथग्रथेन कौरव्य प्रद्युम्नः शत्रुसूदनः । आकाशगामिना राजन् पृष्ठतः कृष्णमन्वियात् ।
निमेषान्तरमात्रेण नन्दनं काननं हरिः । देवोद्यानं ययौ धीमान् पारिजातजिहीर्षया ।
ददर्श तत्र भगवान्देवयोधान्दुरासदान् । नानायुधधरान् वीरान्नन्दनस्थानधोक्षजः ।
तेषां सम्पश्यतामेव पारिजातं महाबलः । उत्पाट्यारोपयामास पारिजातं सतां गतिः ।
गरुडं पक्षिराजानमयत्नेनैव भारत । उपस्थितो विग्रहवान् पारिजातस्तु केशवं ।
सान्त्वितो वासुदेवेन पारिजातश्च भारत । उक्तश्च वृक्ष मा भैस्त्वं केशवेन महात्मना ।
तं प्रस्थितं तरुं दृष्ट्वा पारिजातमधोक्षजः । अमरावतीं पुरीं श्रेष्ठां ततश्चक्रे प्रदक्षिणं ।
ते तु नन्दनगोप्तारः पारिजातो द्रुमोत्तमः । ह्रियतेति महेन्द्राय गत्वा नृप शशंसिरे ।
अथैरावतमारुह्य निर्ययौ पाकशासनः । जयन्तेन रथस्थेन पृष्ठतोऽनुगतः प्रभुः ।
पूर्व्वमभ्यागतं द्वारं केशवं शत्रुनाशनं । दृष्ट्वोवाच प्रवृत्तं भोः किमिदं मधुसूदन ।
प्रणम्य गरुडस्थोऽथ केशवः शक्रमब्रवीत् । वध्वास्ते पुण्यकार्थाय नीयतेऽयं वरद्रुमः ।
तमुवाच ततः शक्रो मैवं पुष्करलोचन । अयोधयित्वा न तद्नेयितव्यस्त्वयाऽच्युत ।
प्रहरस्व महाबाहो प्रथमं मयि केशव । प्रतिज्ञा सफला तेऽस्तु मुञ्च कौमोदकीं मयि ।
ततः कृष्णः शरैस्तीक्ष्णैर्देवराजगजोत्तमं । बिभेदाशनिसङ्काशैः प्रहसन्निव भारत ।
विव्याध गरुडं वज्री दिव्यैः शरवरैस्तदा । बाणांश्च बाणैश्चिच्छेद केशवस्य तरस्विनः ।
यान् यान्मुमोच देवेन्द्रस्तांस्तांश्चिच्छेद माधवः । माधवेन प्रमुक्तांश्च चिच्छेद बलवृत्रहा ।
माहेन्द्रस्य च शब्देन धनुषः कुरुनन्दन । शार्ङ्गस्य च निनादेन मुमुहुः स्वर्गवासिनः ।
तयोर्व्वर्त्तति संग्रामे गरुडस्थं महाबलः । पारिजातं जयन्तोऽथ हर्त्तुमभ्यपतद्बली ।
प्रद्युम्नमथ कंसघ्नो वारयेति तमब्रवीत् । ततस्तं वारयामास रौक्मिणेयः प्रतापवान् ।
जयन्तो जयतां श्रेष्ठो रौक्मिणेयमथेषुभिः । सर्व्वगात्रेषु विहसन्नाजघान रथे स्थितः ।
रथस्थ एव रथिनं कामस्तु कमलेक्षणः । ऐन्द्रिमभ्यर्द्दयामास बाणैराशीविषोपमैः ।

स सन्निपातस्तुमुलो बभूव कुरुनन्दन । जयन्तस्य च वीरस्य रौक्मिणेयस्य चोभयोः ।
कृतप्रतिकृतञ्चैव चक्रतुस्तौ महाबलौ । महेन्द्रोपेन्द्रतनयौ जगत्यस्त्रभृताम्वरौ ।
देवाश्च मुनयश्चैव ददृशुर्विस्मयान्विताः । तं संग्रामं महाघोरं सिद्धाश्चैव सचारणाः ।
ततस्तु प्रवरो नाम देवदूतो महाबलः । पारिजातं पुनर्हर्त्तुमियेष कुरुनन्दन । ७४८५
सखा स देवराजस्य महास्त्रविदरिन्दमः । अवध्यो वरदानेन ब्रह्मणः कुरुनन्दन ।
ब्राह्मणस्तपसा सिद्धो जम्बुद्वीपाद्दिवं गतः । स्वशक्त्या नृपते यातः सखित्वं बलघातिना ।
तमापतन्तं संप्रेक्ष्य कृष्णः सात्यकिमब्रवीत् । तत्रस्थ एव प्रवरं शरैर्व्वारय सात्यके ।
न त्वत्र निर्द्दयं वाणा मोक्तव्याः सात्यके त्वया । अस्य ब्राह्मणचापल्यं सोढव्यं खलु सर्व्वथा ।
ततः षष्ठ्या रथेषूणां गरुडस्थं द्विजस्तदा । आजघान महाबाहो सात्यकिं प्रवरो भृशं । ७४९०
शितैर्नतैर्धनुस्तस्य विपतः सायकान्नृप । चिच्छेद पुरुषव्याघ्रो वचनञ्चेदमब्रवीत् ।
ब्राह्मणो नाभिहन्तव्यस्तिष्ठ तिष्ठ स्ववर्त्मनि । अवध्या यादवानां हि स्वपराद्धा अपि द्विजाः ।
प्रवरस्तु प्रहस्यैनमुवाच कुरुनन्दन । अलं घान्या नृणां शूर युध्य सर्व्वात्मना रणे ।
जामदग्न्यस्य रामस्य शिष्योऽहमपि यादव । नामतः प्रवरो नाम सखा शक्रस्य धीमतः ।
न देवा योद्धुमिच्छन्ति मन्यन्तो मधुसूदनं । आनृण्यं सौहृदस्याहमद्य गन्ताऽस्मि माधव । ७४९५
ततस्तयोस्तदा रौद्रः संग्रामो ववृधे नृप । अस्त्रैर्दिव्यैर्नरव्याघ्र शैनेयद्विजमुख्ययोः ।
द्यौश्चचाल तदा राजन् द्युचराश्च सहस्रशः । तस्मिन् वर्त्तति संग्रामे तेषामतिमहात्मनां ।
नातिशिष्टे रणे कार्ष्णिरैन्द्रिमस्त्रभृताम्वरं । ऐन्द्रिः कार्ष्णिं महात्मानं मायिनं शूरसम्मतं ।
हन्त गृह्ण प्रतीच्छेति तावुभौ योधसत्तमौ । युयुधाते नरश्रेष्ठ परस्परजयैषिणौ ।
अथ शार्ङ्गायुधसुतं शचीपुत्रः प्रतापवान् । विभाव्याभ्यहनद्राजन् दिव्येनास्त्रेण सत्वरः । ७५००
सोऽस्त्रं तदभिदीप्यन्तमापतन्तं शितैः शरैः । तस्तम्भे वाणजालेन तदद्भुतमिवाभवत् ।
ततस्तद्दीप्यमानन्तु पपात रणमूर्द्धनि । रौक्मिणेयस्य कौरव्य घोरं दानवमर्द्दनं ।
तेनास्त्रेण रथो दग्धः प्रद्युम्नस्य महात्मनः । नादहत्तन्तु घोरं तं रौक्मिणेयं जनाधिपः ।
दहत्यग्निं न स्वल्वग्निरुद्धतोऽपि विशाम्पते । दग्धाद्रथान्महाबाहू रौक्मिणेयोऽपचक्रमे ।
अथ नारायणसुतो विरथो रथिनाम्वरः । स्थितो धनुष्मानाकाशे जयन्तमिदमब्रवीत् । ७५०५
महेन्द्रपुत्र दिव्यं त्वं यदस्त्रं मुक्तवानसि । नाहमीदृशरूपाणां शक्यो हन्तुं शतैरपि ।
प्रयत्नं कुरु शिक्षाणां यत्नं मेऽद्य प्रदर्शय । नास्ति मेऽतिशयं कर्त्ता संग्रामेऽमरनन्दन ।
आसीन्मे साध्वसं दृष्ट्वा रथस्थं त्वां धृतायुधं । बिभेमि तव नेदानीं युद्धे दृष्टबलाऽबलः ।
मनसा स्पृश्यतामेव पारिजातस्त्वया तरुः । शक्यं न खलु हस्ताभ्यां प्रष्टव्यो यस्त्वया ह्यसौ ।
रथो मायामयो दग्धस्त्वया यो ह्यस्त्रतेजसा । ईदृशानां सहस्राणि स्रष्टुं शक्तोऽस्मि मायया । ७५१०
एवमुक्तो जयन्तस्तु मुमोचास्त्रं महाबलः । तपसोत्पादितं तेन स्वयमेवातितेजसा ।

तत्प्रद्युम्नो महावेगं शरजालैरवारयत् । चत्वार्य्यस्त्राणि दिव्यानि मुमोच चापराणि सः ।
दिक्षु सर्व्वासु रुरुधुस्तान्यस्त्राण्यथ भारत । रौक्मिणेयं महात्मानमन्तरीक्षे च पश्चिमं ।
महोल्कासदृशान् वाणानस्त्राण्यमरसत्तमः । मुमोच यानि घोराणि प्रद्युम्नं प्रति सर्व्वतः ।
तानि सर्व्वाणि वाणौघैः कार्ष्णिरस्त्राण्यवारयत् । जयन्तञ्चापरैर्व्वाणैर्विव्याध निशितैस्तदा । ७११५
ततो नादः समुत्सृष्टो द्युचरैः पुण्यकर्म्मभिः । दृष्ट्वा स्थैर्य्यञ्च शौर्य्यञ्च प्रद्युम्नस्य महात्मनः ।
प्रवरस्यापि वाणेन शितेन शिनिपुङ्गवः । चिच्छेदेष्वासनं वीरो हस्तावापञ्च भारत ।
ततोऽन्यत्तु जग्राह महत्तद्धनुरुत्तमं । महेन्द्रदत्तं प्रवरो महाशनिसमस्वनं ।
स तेन वीरो महता धनुषा विप्रसत्तमः । शरान्मुमोच विशिखानर्करश्मिनिभांस्तदा ।
चकर्त्त च धनुश्चित्रं शैनेयस्यामितौजसः । विव्याध सर्व्वगात्रेषु वाणैरपि च सात्यकिं । ७१२०
धनुरादाय शैनेयस्ततोऽन्यत् कुरुनन्दन । दृढं भारसहं धीमान् विव्याध प्रवरं रणे ।
उभावकर्त्ततुरन्योन्यं वर्म्मणी तौ शितैः शरैः । गात्रेभ्यश्चैव मांसानि मर्म्मभिद्भिः शरोत्तमैः ।
अथापरेण वाणेन पुनरिष्वासनं द्विधा । चिच्छेद प्रवरो वीरस्त्रिभिश्चैनमताडयत् ।
अन्यदिष्वासनं तत्तु ग्रहीतुमनसं द्विजः । गदया ताडयामास चेष्टया लघुहस्तवत् ।
सोऽसिं चर्म्म च जग्राह सात्यकिः प्रहसन्निव । न जग्राह धनुर्द्धीमान् गदयाऽभिहतो भृशं । ७१२५
ततः शरशतान्येव मुमोच प्रवरस्तदा । विहस्तमिव विज्ञाय सत्यकं यदुनन्दनं ।
प्रद्युम्नोऽस्य ददौ खड्गं निर्म्मलाकाशसन्निभं । तस्य चिच्छेद भल्लेन निस्त्रिंशं प्रवरस्तदा ।
स्कन्धदेशे ऽपातयच्च प्रवरः प्रहसन्निव । व्यधमच्च तथा चर्म्म शितैर्व्वाणैरजिह्मगैः ।
आजघान च शक्त्यैनं हृदि विप्रो ननाद च । तं विक्लवमिव ज्ञात्वा पारिजातजिहीर्षया ।
तार्क्ष्योऽभ्यासे रथेनैव स तस्थौ प्रवरस्तदा । तं पक्षपुटवेगेन चिक्षेप गरुडस्तदा । ७१३०
गव्यूतिमेकां स रथः पपात च मुमोह च । तं जयन्तो निपत्याथ पतितं शाक्रं नृप ।
समाश्वास्य रथं शीघ्रं समारोपितवांस्तदा । शैनेयमपि मुह्यन्तं पतन्तञ्च मुहुर्म्मुहुः ।
आश्वासयानः प्रद्युम्नः पितृव्यं परिषस्वजे । तं हि पस्पर्श हस्तेन सव्येन मधुसूदनः ।
नीरुजः स्पृष्टमात्रस्तु सात्यकः समपद्यत । प्रद्युम्नो दक्षिणे पार्श्वे वामे तु शिनिपुङ्गवः ।
तस्थतुः पारिजातस्य युद्धशौण्डौ तु तावुभौ । जयन्तः प्रवरश्चैव रथेनैकेन भारत । ७१३५
सम्पतन्तौ महेन्द्रेण प्रहस्योक्तौ महात्मना । नासन्नमभिगन्तव्यं गरुडस्य कथञ्चन ।
बलवानेष पततां राजा च विनतासुतः । दक्षिणे चैव सव्ये च पार्श्वे मम धृतायुधौ ।
उभौ स्थितौ युध्यमानं मामेवेह प्रपश्यतां । एवमुक्तौ स्थितौ वीरौ ततः शक्रस्य पार्श्वयोः ।
ददृशाते युध्यमानौ देवराजजनार्द्दनौ । अथेन्द्रो गरुडं वाणैर्म्महाशनिसमस्वनैः ।
विव्याध सर्व्वगात्रेषु महास्त्रप्रभवैस्तदा । स तान् वाणाञ्च गणयन् वैनतेयः प्रतापवान् । ७१४०
ससाराभिमुखो वीरः शक्रनागमरिन्दमः । उभौ तौ सहसा राजन् बलिनौ गजपक्षिणौ ।

प्रयुद्धौ वीर्य्यसम्पन्नौ महाप्राणौ दुरासदौ । रदनैः पन्नगरिपुं करेण शिरसा तथा ।
ऐरावणो गजपतिराजघान नदंस्तया । ततो नखाङ्कुशैस्तीक्ष्णैर्वैनतेयो बलोत्कटः ।
तथा पक्षनिपातैश्च शक्रनागमताडयत् । स मुहूर्त्तं महानासीत् सम्मर्द्दो गजपक्षिणोः ।
विस्मापनीयो जगतः प्रेक्षितॄणां भयावहः । मूर्द्ध्न्यथैरावणं तार्क्ष्यस्ताडयामास भारत । ७१०५
नखाङ्कुशकरालेन चरणेन महाबलः । संप्रहाराभिषन्नाङ्गः स पपात त्रिपिष्टपात् ।
पारिपात्रे गिरिश्रेष्ठे द्वीपेऽस्मिन् जनमेजय । पतन्तमपि तं शक्रो न मुमोच महाबलः ।
कारुण्यादथ सौहार्द्दात् पूर्व्वाभ्युपगमादपि । कृष्णोऽप्यन्वागमच्चैनं पृष्ठतः प्रभवाव्ययः ।
पारिजातवता वीरो गरुडेन महाबलः । सनूदपर्व्वते तस्मौ पारिपात्रे तु वृत्रहा ।
ऐरावणे समाश्वस्ते संग्रामो ववृधे पुनः । शरैराशीविषप्रख्यैरस्त्रयुक्तैः सुतेजितैः । ७११०
अन्योन्यं कुरुशार्दूल शक्रकेशवयोर्म्महान् । ततो वज्रायुधो वज्रमशनिञ्च पुनः पुनः ।
मुमोच गरुडे राजन्नैरावणरिपौ नृप । वज्राशनिनिपातांस्तान् सेहे शक्रस्य नागहा ।
अवध्यो बलिनां श्रेष्ठो निसर्गेण तपोबलात् । मुमोच पक्षमेकैकं मानयन्नशनिन्तदा ।
वज्रञ्च देवराजो वै भ्रातुः कश्यपसम्भवः । आक्रम्यमाणस्तार्क्ष्येण न्यमज्जन्नृपते गिरिः ।
विवेश धरणीं राजन् शीर्य्यमाणः समन्ततः । चुकूज बहुमानेन कृष्णस्य स तु पर्व्वतः । ७११५
तमद्रावीत्ततः कृष्णः किञ्चिच्छेषमधोक्षजः । तं मुक्त्वा गरुडेनाथ तस्थौ देवो विहायसि ।
प्रद्युम्नञ्च तदोवाच सर्व्वलोकभावनः । इतो द्वारवतीं गत्वा रथमानय माचिरं ।
स दारुकं महाबाहो मत्तेजोबलमाश्रितः । वक्तव्यो बलभद्रश्च राजा च कुकुराधिपः ।
श्वो जितेन्द्रमागमिष्ये द्वारकामिति मानद । तथेत्युक्त्वा तु धर्म्मात्मा प्रद्युम्नः पितरं विभुः ।
गत्वा यथोक्तमुक्त्वा च यादवेन्द्रबलावुभौ । नाडिकान्तरमात्रेण पुनस्तं देशमाययौ । ७१२०
दारुकेण समायुक्तं रथमास्थाय भारत ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे द्वात्रिंशदधिकशततोऽध्यायः ॥ १३२ ॥

॥ वैशम्पायन उवाच ॥ तमारुह्य रथं कृष्णः पारिपात्रं गिरिं ययौ । यत्रैरावणमास्थाय स्थितः सुरपतिः प्रभुः ।
पारिपात्रो गिरिश्रेष्ठो दृष्ट्वायान्तं जनार्द्दनं । शाणपादसमो भूत्वा प्रविवेश वसुन्धरां ।
प्रियार्थं वासुदेवस्य प्रभावज्ञो महात्मनः । तस्य प्रीतो हृषीकेशः पर्व्वतस्य जनाधिप ।
ततः प्रयान्तं युद्धार्थमच्युतं कुरुनन्दन । सपारिजातो गरुडः पृष्ठतोऽनुययौ बली । ७१२५
प्रद्युम्नः सात्यकिश्चापि गरुडस्थौ महाबलौ । गतावुभौ रक्षणार्थं पारिजातमरिन्दमौ ।
ततोऽस्तमगमत् सूर्य्यः प्रवृत्ता रजनी नृप । उपस्थितं पुनर्युद्धं शक्रकेशवयोः प्रभो ।
सुप्रहारहतं दृष्ट्वा विष्णुरैरावणं गजं । नातिकल्यं महातेजा देवराजानमब्रवीत् ।
गरुडाभिहतः पूर्व्वन्नातिकल्यो गजोत्तमः । ऐरावणो महाबाहो रात्रिश्च समुपोस्थिते ।
श्वः प्रभाते पुनः कामं प्रवर्त्तस्व यथेच्छसि । एवमस्त्विति कृष्णञ्च देवराजोऽब्रवीत् प्रभु । ७१३०

उवास पुष्कराध्यासे देवराजः पुरन्दरः । व्रजं गिरिमथं कृत्वा धर्म्मात्मा नृपसत्तम ।
ब्रह्मा तत्राजगामाथ कश्यपश्च महानृषिः । अदितिश्चैव सर्व्वे च देवा मुनय एव च ।
साध्या विश्वे च कौरव्य नासत्यावश्विनौ तथा । आदित्याश्चैव रुद्राश्च वसवश्च जनेश्वर ।
नारायणस्य पुत्रेण सत्यकेन च भारत । सहोवास गिरौ रम्ये पारिपार्श्वे प्रहृष्टवत् ।
यः स शाणप्रमाणोऽस्य भक्त्या समभवन्नृप । वरं प्रादात्ततस्तस्य पर्व्वतस्य सतां गतिः । ७८७५
शाणपाद इति ख्यातो भविष्यसि महागिरे । पुष्टिनार्द्धेन तुल्यश्च पुण्यो हिमवतः शुभः ।
एवमेव च भूमिष्ठो भव पर्व्वतसत्तम । मेरुणा स्पर्द्धमानो हि बहुचित्रमृगायुतः ।
तथा दत्त्वा वरं तस्य पर्व्वतस्य तु केशवः । दध्यौ गङ्गां सरिच्छ्रेष्ठां नमस्कृत्वा वृषध्वजं ।
अथाययौ विष्णुपदी स्मृता कृष्णेन भारत । संपूज्य तां ततः कृष्णः स्नातस्तस्यामधोक्षजः ।
उदकञ्च गृहीत्वेशो विल्वञ्च हरिरव्ययः । देवमावाहयामास रुद्रं सर्व्वेश्वरेश्वरं । ७८८०
ततः प्राप्तो महादेवः सोमः स प्रवरो विभुः । तस्थावुपरि विल्वस्य तथा गङ्गोदकस्य च ।
तं पारिजातकुसुमैरर्चयामास केशवः । तुष्टाव वाग्भिरीशेशं सर्व्वकर्त्तारमीश्वरं ।

॥ श्रीकृष्ण उवाच ॥ रुद्रो देव त्वं रुदनाद्द्रावणाच्च रौरूयमाशो द्रावणाच्चातिदेवः । भक्तं भक्तानां वत्सलं वत्सजानां कीर्त्त्या युङ्क्तेति त्वाऽद्य प्रभवाम्यन्तरेण ।
याम्यारण्यानां त्वं पतिस्त्वं पशूनां ख्यातो देवः पशुपतिः सर्व्वकर्त्ता । नान्यस्त्वत्तः परमो देवदेव जगत्पतिः सुरवीरारिहन्ता ।
यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च । तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो विद्वांसः सर्व्वशास्त्रार्थतत्त्वाः । ७८८५
भूतं यस्माज्जगदत्यन्तघोरं त्वत्तोऽव्यक्तादक्षरादक्षरेश । तस्मात्त्वामाहुर्भव इत्येव भूतं सर्व्वेश्वराणां महतामत्युदारं ।
यस्मात्त्वितैरभिषिक्तोऽसि सर्व्वैर्द्देवासुरैः सर्व्वभूतैश्च देव । महेश्वरं विश्वकर्म्माणमाहुस्त्वां वै सर्व्वे तेन देवातिदेव ।
पूज्यो देवैः पूज्यसे नित्यदा वै श्रेयस्कैः श्रेयःकाङ्क्षिभिर्वरदामेयवीर्य्यः । तस्मादिख्यातो भगवान्देवदेवः सतामिष्टः सर्व्वभूतात्मभावी ।
भूमित्रयाणां देव यस्मात् प्रतिष्ठा पुनर्लोकानां भावनोऽमेयकीर्त्तिः । त्र्यम्बकेति प्रथमं तेन नाम तवाप्रमेयस्त्रिदशेशनाथ ।
शर्व्वः शत्रूणां शासनादप्रमेयस्तथा भूयः शासनाच्चेश्वरेण । सर्व्वव्यापित्वाच्छङ्करत्वाच्च सद्भिः शब्दस्येशान् ओङ्कारोऽग्र्यतेजाः । ७८९०
सम्भक्तानां नित्यदा यत् करोषि शमं भ्रातृव्यान् यच्छसेषोः समस्तान् । तस्माद्देव शङ्करोऽस्यप्रमेयः सद्भिर्द्दुर्म्मेशैः कथ्यसे सर्व्वनाथ ।
दत्तः प्रहारः कुलिशेन पूर्व्वं तवेशान सुरराज्ञाऽतिवीर्य्य । कण्ठे नैल्यं तेन त यत् प्रवृत्तं तस्मात् ख्यातस्त्वं नीलकण्ठेतिकल्य: ।
यल्लिङ्गाङ्कं यच्च लोके भगाङ्कं सर्व्वं सोमस्त्वं स्थावरं जङ्गमञ्च । प्राहुर्विप्रास्त्वां गुणिनं तत्त्वज्ञास्तथाविष्ठेयामम्बिकां लोकधात्रीं ।
वेदैर्गीता सा हि तत्त्वं प्रसूता यस्तो दीक्षाणां योगिनां चातिरूपः । नात्यद्भुतं त्वत्समं देव भूतं भूतं भव्यं भवदेवाथ नास्ति ।
अहं ब्रह्मा कपिलोऽप्यथानन्तः पुत्राः सर्व्वे ब्रह्मणश्चातिवीराः । त्वत्तः सर्व्वे देवदेव प्रसूता एवं सर्व्वेशः कारणात्मा त्वमीड्यः । ७८९५

इति संस्तूयमानस्तु भगवान् गोवृषध्वजः । प्रसार्य्य दक्षिणं हस्तं गोविन्दमिदमब्रवीत् ।
मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम । पारिजातञ्च हर्त्ताऽसि मा भूत्ते मनसो व्यथा ।
यदा मैनाकमाश्रित्य तपस्त्वमकरोः प्रभो । तदा दत्तं वरं कृष्ण संस्मृत्य स्थैर्य्यमाप्नुहि ।
अवध्यस्त्वमजेयश्च मत्तः शूरतरस्तथा । भविताऽसीत्यवोचं यत्तत्तथा न तदन्यथा ।
यः संस्तवेन मां कश्चित् स्तोष्यत्यमरसत्तम । त्वया कृतेन धर्म्मज्ञ धर्म्मभाक् स भविष्यति । ७१००
समरे च जयं विष्णो प्राप्य पूजां तथोत्तमां । बिल्वोदकेश्वरो नाम भविताऽहमिहानघ ।
देशे त्वया स्थापितो वै देव सिद्धोपयाचनः । इहस्थोपोषितो विद्वान् भक्तिमान्मम केशव ।
चिरात्समीप्सितान् लोकान् गमिष्यति जनार्द्दन । अविन्ध्या नाम देशेऽस्मिन् गङ्गा चैव भविष्यति ।
गङ्गास्नानसमं स्नानं मन्मतो भविता तथा । षट्पुरं नाम नगरं दानवानां जनार्द्दन ।
अत्रान्तर्द्धरणीदेशे तत्राक्रम्य महाबलाः । एते हिंस्रा दुरात्मानो जगतो देव कण्टकाः । ७१०५
कृत्वा वसन्ति गोविन्द सानावस्य महागिरेः । अवध्या देवदेवानां वरेण ब्रह्मणोऽनघ ।
मानुषान्तरितस्तस्मात्त्वमेताञ्जहि केशव । एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
परिष्वज्य महात्मानं वासुदेवं जनाधिप । ततो याते महादेवे प्रभातायां नराधिप ।
तस्यां निशायां गोविन्दो भूयः पर्व्वतमब्रवीत् । तवाधः पर्व्वतश्रेष्ठ निवसन्ति महासुराः ।
ते निरुद्धा मया चात्र जगतो हितकाम्यया । निर्गमिष्यन्ति ते नैव मया रुद्धा महाबलाः । ७११०
द्वारे निरुद्धे तत्रैव विनङ्क्ष्यन्ति ममाज्ञया । त्वयि सन्निहितश्चाहं भविष्यामि महागिरे ।
अधिष्ठाय महाघोरान्निवत्स्यामि च पर्व्वत । आरोक्ष्यत्यूर्द्ध्वाङ्गस्य यस्त्वां पर्व्वतसत्तम ।
गोसहस्रप्रदानस्य फलं प्राप्स्यति शाश्वतं । त्वत्तोऽश्मभिश्च प्रतिमां कारयित्वेह भक्तितः ।
शुश्रूषिष्यन्ति ये नित्यं मम यास्यन्ति ते गतिं । इति तं पर्व्वतं कृष्णो वरदोऽनुगृह्णीतवान् ।
तदाप्रभृति देवेशस्तत्र सन्निहितोऽच्युतः । पाषाणैः प्रतिमां तत्र कारयित्वा च कौरव । ७११५
शुश्रूषन्ति कृतात्मानो विष्णुलोकाभिकाङ्क्षिणः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे त्रयस्त्रिंशदधिकशततोऽध्यायः ॥ १३३ ॥
॥ वैशम्पायन उवाच ॥ ततो रथवरं कृष्णः समारुह्य महामनाः । बिल्वोदकेश्वरं देवं नमस्कृत्य ययौ नृप ।
महेन्द्रमाह्वयामास रथस्थो मधुसूदनः । सत्कृतं पुष्कराभ्यासे सर्व्वैर्देवगणैः सह ।
ततः शक्रो जयन्तोऽथ हरिभिर्युक्तमुत्तमं । आरुरोह रथं देवः सर्व्वकामप्रदः सतां ।
तयोरथस्थयोर्युद्धमभवत् कुरुनन्दन । देवयोर्द्दैवयोगेन पारिजातकृते तदा । ७१२०
ततर्द्द तरसा विष्णुर्बाणैः शत्रुबलार्द्दनः । सैन्यानि देवराजस्य वाणजालैरजिह्मगैः ।
उपेन्द्रं न महेन्द्रोऽथ नैव विष्णुः सुरेश्वरं । ताडयामासतुर्व्वीरौ शस्त्रैः शक्तावपि प्रभो ।
एकैकमश्वं दशभिर्म्महेन्द्रस्य जनार्द्दनः । विव्याध विशिखैस्तीक्ष्णैरसयुक्तैर्ज्जनेश्वर ।
सैन्यान्यपि च देवेन्द्रः शरैरमरसत्तमः । छादयामास राजेन्द्र घोरैरस्त्राभिमन्त्रितैः ।

वज्री वाणसहस्रैस्तु कृष्णो गजमवाकिरत्। गरुडश्च महातेजा वलभिद्दुरिवाहनः। ७१२५
भूमिष्ठाभ्यां रथाभ्यान्तौ तदहः शत्रुदारणौ। युयुधाते महात्मानौ नारायणसुराधिपौ।
चकम्पे वसुधा कृत्स्ना नौर्जलस्थेव भारत। दिशां दाहेन दिग्देशाः संवृताश्च समन्ततः।
चेलुर्गिरिवराश्चैव पेतुश्च शतशो द्रुमाः। पेतुश्च धरणीपृष्ठे मर्त्या धर्म्मगुणान्विताः।
निर्घाताः शतशश्चैव पेतुस्तत्र नराधिप। ऊहुश्च सरितः सर्व्वाः प्रतिस्रोतो विशाम्पते।
विश्वग्वाता ववुश्चैव पेतुरुल्काश्च निष्प्रभाः। मुहुर्म्मुहुर्भूतगणा रथनादेन मोहिताः। ७१३०
प्रजज्वाल जले चैव वह्निर्जनपदेश्वर। युयुधुश्च ग्रहैः सार्द्धं ग्रहा नभसि सर्व्वतः।
ज्योतींषि शतशः पेतुः स्वर्गाच्च धरणीतले। दिशां गजाः संक्षुभिता नागाश्च धरणीतले।
गर्द्दभारुणसंस्थानैश्छिन्नाभ्रैरावृतं नभः। विनदद्भिर्म्महारावैरुल्काशोणितवर्षिभिः।
न भूर्न द्यौर्न गगनं नरेन्द्रवृषभाभवत्। स्वस्थाने सुरवीरौ तु दृष्ट्वा युद्धगतौ तदा।
जेपुर्म्मुनिगणा मन्त्रान् जगतो हितकाम्यया। ब्राह्मणाश्च महात्मानो व्यतिष्ठंस्तेषु सत्वराः। ७१३५
ततो ब्रह्मा महातेजाः कश्यपं वाक्यमब्रवीत्। गच्छ वध्वा सहादित्या पुत्रौ वारय सुव्रत।
स तथेति तदा देवमुक्त्वा पद्मभवं मुनिः। जगाम रथमारुह्य तस्थौ नरवरान्तिके।
स्थितन्तु कश्यपं दृष्ट्वा सहादित्या तदान्तरा। उभौ रथाभ्यां धरणीमवतीर्णौ महाबलौ।
न्यस्तशस्त्रौ तु तौ वीरौ ववन्दतुररिन्दमौ। पितरौ धर्म्मतत्त्वज्ञौ सर्व्वभूतहिते रतौ।
उभौ गृहाय हस्ताभ्यामदितिस्त्वब्रवीद्वचः। शक्रोदराविवैवं किमन्योन्यं हन्तुमिच्छथः। ७१४०
स्वल्पमर्थं पुरस्कृत्य प्रवृत्तमतिदारुणं। युद्धं नेति पश्यामि सर्व्वथा मम पुत्रयोः।
श्रोतव्यं यदि मातुश्च पितुश्चैव प्रजापतेः। न्यस्तशस्त्रौ स्थितौ भूत्वा कुरुतं वचनं मम।
तथेत्युक्त्वा तु तौ देवौ स्नातुकामौ महाबलौ। गङ्गां जग्मतुरेवाथ कथयन्तौ परस्परं।
॥ शक्र उवाच ॥ त्वं प्रभुः कृष्ण लोकस्य राज्येऽहं स्थापितस्त्वया। स्थापयित्वा कथं नाम पुनर्म्मामवमन्यसे।
भ्रातृत्वमुपगम्यैवं ज्येष्ठत्वं प्रतिपूज्य च। कथं कमलपत्राक्ष निर्व्वाणं कर्त्तुमर्हसि। ७१४५
स्नात्वा तु जाह्नवीतोये पुनरभ्यागतौ नृप। यत्रादितिः कश्यपश्च महात्मानौ दृढव्रतौ।
प्रियसङ्गमनं नाम तं देशं मुनयोऽवदन्। यत्र तौ सङ्गतौ चोभौ पितृभ्यां कमलेक्षणौ।
ततः शक्रस्य कौरव्य दत्त्वा वाचाऽभयं तदा। यत्र देवगणाः सर्व्वे समेता धर्म्मचारिणः।
ततो ययुर्विमानैस्तु देवाः सर्व्वे त्रिपिष्टपं। श्रद्धया परमया युक्तास्तेषामेवानुरूपया।
कश्यपश्चादितिश्चैव तथा शक्रजनार्द्दनौ। विमानमेकमारुह्य गता राजंस्त्रिपिष्टपं। ७१५०
ते शक्रसदनं प्राप्ता रम्यं सर्व्वगुणान्वितं। ऊषुरेकत्र कौरव्य मुदिता धर्म्मचारिणः।
शची तु कश्यपं पत्न्या सहितं धर्म्मवत्सला। उपाचरन्महात्मानं सर्व्वभूतहिते रतं।
ततस्तस्यां प्रभातायां रजन्यामब्रवीद्धरिं। अदितिर्द्धर्म्मतत्त्वज्ञा सर्व्वभूतहितङ्करं।
उपेन्द्र द्वारकां गच्छ पारिजातं नयस्व च। वध्वाः संप्रापयस्वेमं पुण्यकं हृदयेप्सितं।

पुष्पके सत्यया प्राप्ते पुनरेव त्वया तरुः । नन्दने पुरुषश्रेष्ठ स्थाप्यः स्थाने यथोचिते । ७१५५
एवमस्त्विति कृष्णेन देवमाता यशस्विनी । उक्ता धर्म्मगुणैर्युक्ता नारदेन महात्मना ।
ततोऽभिवाद्य पितरं मातरञ्च जनार्द्दनः । महेन्द्रं सह शच्या च प्रतस्थे द्वारकां प्रति ।
ददौ कृष्णाय पौलोमी नियोगात् कुरुनन्दन । सर्व्वासामेव कृष्णस्य भार्य्याणां धर्म्मचारिणी ।
दिव्यानां सर्व्वरत्नानां वाससाञ्च मनस्विनी । नानारागविचित्राणां सदैवारजसामपि ।
भार्य्याणाञ्च सहस्राणि यानि षोडश माधवे । प्रतिगृह्य महातेजाः प्रययौ द्वारकां प्रति । ७१६०
संपूज्यमानो ह्यमरैः सुकर्म्मा पुण्यकर्म्मभिः । ससत्यकः सपुत्रश्च प्राप्तो रैवतकं गिरिं ।
स तत्र स्थापयित्वा तु पारिजातं वरद्रुमं । सत्यकं प्रेषयामास द्वारकां द्वारमालिनीं ।
॥ कृष्ण उवाच ॥ पारिजातमिहानीतं महेन्द्रभवनान्मया । निवेदय महाबाहो भैमानां भैमवर्द्धन ।
अद्य द्वारवतीञ्चैव पारिजातं वरद्रुमं । प्रवेशयिष्ये नगरे शोभा प्रक्रियतां शुभा ।
इत्युक्तः सत्यको गत्वा तथोक्त्वा पुनरागतः । कुमारैरपरैः सार्द्धं शाम्बप्रभृतिभिः प्रभो । ७१६५
ततोऽग्रतः पारिजातमारोप्य गरुडे तदा । प्रद्युम्नो द्वारकां रम्यां विवेश रथिनाम्बरः ।
शैव्याद्यहययुक्तेन रथेनानुययौ हरिः । तस्यानु रथमुख्येन सत्यकः शाम्ब एव च ।
ये त्वन्ये नृप वार्ष्णेया यानैर्ब्बहुविधैस्तथा । ययुः प्रहृष्टास्तत् कर्म्म पूजयन्तो महात्मनः ।
सत्यकाद्विस्तरं श्रुत्वा यादवा नागरास्तथा । विस्मयं परमं जग्मुरप्रमेयस्य कर्म्मणा ।
तं दिव्यकुसुमं वृक्षं दृष्ट्वा मर्त्यनिवासिनः । राजन् तत्पुरे हृष्टाः पश्यमाना महोदयं । ७१७०
तदद्भुतमचिन्त्यञ्च मदकेलिकिलाकुलं । वृक्षोत्तमं पश्यतां वै वृद्धानामगमज्जरा ।
येऽन्धाः सचक्षुषः सर्व्वे सम्बभूवुः क्षणादिव । विरोगा रोगिणश्चासन् श्रुत्वा मन्थं वनस्पतेः ।
जपन्तः कोकिलाः श्वेताः श्रुत्वा मर्त्यनिवासिनः । बभूवुर्हृष्टमनसो ववन्दुश्च जनार्द्दनं ।
नानाविधानि वाद्यानि गेयानि मधुराणि च । शुश्रुवुस्तस्य वृक्षस्य नातिदूरगता नराः ।
योऽयं संकल्पयामास गन्धं हृद्यं नरस्तदा । स तमेव समाजघ्रौ पारिजातसमुद्भवं । ७१७५
ततः प्रविश्य रम्यान्तु द्वारकां यदुनन्दनः । वसुदेवं महात्मानं ददृशे देवकीन्तदा ।
कुकुराधिपतिञ्चैव बलं भ्रातरमेव च । वृद्धांश्च यादवानन्यान् मानार्हानमरोपमान् ।
विसृज्य तान् वै भगवाननादिनिधनोऽच्युतः । संपूज्य च यथान्यायं स्वमेव भवनं गतः ।
स सत्यभामया वासं विवेश मधुसूदनः । पारिजातं तरुश्रेष्ठं गृहाय गदपूर्व्वजः ।
सा देवी पूजयामास प्रहृष्टा वासवानुजं । प्रतिजग्राह तञ्चापि पारिजातं महाद्रुमं । ७१८०
मनीषितेन स तरुरूपो भवति भारत । महत्त्वाद्वासुदेवस्य तदद्भुतमभून्महत् ।
कदाचिद्द्वारकां सर्व्वां प्रच्छादयति भारत । कदाचिद्धस्तहार्य्यस्तु भवत्यङ्गुष्ठसन्निभः ।
ननन्द सत्या कौरव्य देवी प्राप्तमनोरथा । पुण्यकार्थञ्च सम्भारान् सम्भर्त्तुमुपचक्रमे ।
यानि द्रव्याणि कौरव्य जम्बुद्वीपे तु कानिचित् । योग्यानि तानि कृष्णेन संहृतानि महात्मना ।

मुनिं तदा संस्तुतवान् स नारदं जनार्द्दनः सर्व्वगुणोदितं वशी । प्रतिग्रहार्थं व्रतकस्य सत्यया यथोपदिष्टः स पुरन्दरानुजः । ७९८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे चतुस्त्रिंशदधिकशततोऽध्यायः ॥ १३४ ॥

॥ वैशम्पायन उवाच ॥ अथ कृष्णस्य कौरव्य ध्यातमात्रे तपोधनः । आजगाम मुनिश्रेष्ठो नारदो वदताम्वरः ।
तं पूजयित्वा विधिवद्वासुदेवो विशाम्पते । प्रतिग्रहार्थं विधिवच्छ्रीमानभ्यनिमन्त्रयत् ।
ततः काले च संप्राप्ते स्नातं देवो महामुनिं । संपूज्य माल्यैर्गन्धैश्च भोजयामास भारत ।
सार्व्वकामिकमन्नाद्यं सर्व्वभूतकृदव्ययः । सत्यया प्रियया सार्द्धं प्रहृष्टेनान्तरात्मना ।
पुष्पदामावसज्याय कण्ठे कृष्णस्य भाविनी । बबन्ध कृष्णं सुभगा पारिजाते वनस्पतौ । ७९९०
अद्भिर्द्ददौ नारदाय ततोऽनुज्ञाप्य केशवं । देवी धेनुसहस्रञ्च काञ्चनस्य च पर्व्वतं ।
हिरण्यरूप्यमिश्रञ्च मणिरत्नयुतस्य च । तिलमिश्रस्य च तथा धान्यैरन्यैर्युतस्य च ।
प्रतिगृह्य तु तत् सर्व्वं नारदो मुनिसत्तमः । प्रहृष्टो वदतां श्रेष्ठो मुक्त्वा केशवमब्रवीत् ।
भोः केशव मदीयस्त्वमद्भिर्दत्तोऽसि सत्यया । स त्वं मामनुगच्छस्व कुरुष्व यद्ब्रवीम्यहं ।
प्रथमः कल्प इत्येवमब्रवीन्मधुसूदनः । व्रजन्तमनुवव्राज नारदञ्च जनार्द्दनः । ७९९५
परिहासान् बहुविधान् कृत्वा मुनिवरस्ततः । तिष्ठस्व गच्छामीत्युक्त्वा परिहासविचक्षणः ।
अपनीय ततः कण्ठात् पुष्पदामैनमब्रवीत् । कपिलां गां सवत्सां भो निष्क्रयार्थं प्रयच्छ मे ।
तिलकृष्णाजिनं सूर्पं प्रयच्छ त्वञ्च काञ्चनं । एषोऽत्र निष्क्रयः कृष्ण विहितो वृषकेतुना ।
तथेत्युक्त्वा हृषीकेशस्तथा चक्रे जनाधिप । उवाच तं मुनिश्रेष्ठं हसित्वा मधुसूदनः ।
वरं वरय धर्म्मज्ञ यस्ते नारद काङ्क्षितः । तव दाताऽस्मि धर्म्मज्ञ परा प्रीतिर्हि मे त्वयि । ८०००
॥ नारद उवाच ॥ नित्यमेवास्तु मे प्रीतो भवान् विष्णो सनातन । त्वत्प्रभावात्तु सालोक्यं व्रजेयं ते महामते ।
अयोनिजो भवेयञ्च नारायण सताङ्गते । भवेयं ब्राह्मणश्चैव देव जात्यन्तरेष्वहं ।
एवमस्त्विति तं देवो विष्णुः प्रोवाच भारत । तुतोष च ततो धीमान्नारदो मुनिसत्तमः ।
षोडशस्त्रीसहस्राणि विष्णोरतुलतेजसः । निमन्त्रितानि कौरव्य सत्यया हरिकान्तया ।
तासां ददौ सन्नियोगमेकैकं हरिवल्लभा । शच्या यो वासुदेवस्य पुरा दत्तो नराधिप । ८००५
पारिजातो वर्षंस्तत्र ततः प्रवृत्ते तदा । आज्ञया वासुदेवस्य नारदेन महात्मना ।
निमन्त्रिता गणाः सर्व्वे केशवेन महात्मना । विभूतिं पारिजातस्य ददृशुः कुरुनन्दन ।
पाण्डवांश्चानयामास सहैव पृथया हरिः । द्रौपद्या च महातेजास्तथैव च सुभद्रया
श्रुतश्रवाञ्च ससुतां भीष्मकं ससुतं तथा । अन्यानपि च कौरव्य मित्रसम्बन्धिबान्धवान् ।
रेमे च सह पार्थेन फाल्गुनेन जनार्द्दनः । सान्तःपुरो महातेजाः परमर्द्ध्या वसन्नृप । ८०१०
संवत्सरे ततो याते केशिहाऽमरसन्निभः । पारिजातं पुनः स्वर्गमनयत्सर्व्वभावनः ।
तत्रादितिं कश्यपञ्च दृष्ट्वा स्वपितरौ प्रभुः । शक्रेण सहितो धीमानप्रमेयपराक्रमः ।

तमुवाचादितिर्माता प्रणतं मधुसूदनं । शोभ्रात्वमेव वां नित्यं भवत्वमरसत्तम ।
मनोरथं ममैवं त्वं पूरयस्व जनार्द्दन । तथाऽस्त्वित्यब्रवीत्कृष्णस्ततो मातरमात्मवान् ।
आमन्त्रयित्वा पितरौ देवराजानमब्रवीत् । वासुदेवो महातेजाः कालप्राप्तमिदं वचः । ७०१५
महादेवेन देवेश सन्दिष्टोऽस्मि महात्मना । अन्तर्भूमितले ऽवध्यानसुरान् प्रति मानद ।
तदितो दशरात्रेण हन्ताऽहमसुरोत्तमान् । तत्रोपरिष्टात् स्वातन्त्र्यं प्रवरेण महात्मना ।
जयन्तेन च वीरेण दानवानां जिघांसया । एकोऽत्र मानुषो देवो देवपुत्रस्तथाऽपरः ।
अवध्याः किल देवैस्ते ब्रह्मणो वरदर्पिताः । अस्माभिः किल हन्तव्या मानुषत्वमुपागतैः ।
तथेति कृष्णं स हरिः प्रीतरूपस्तदाऽब्रवीत् । सस्वजातेऽथ तौ देवावन्योन्यं जनमेजय । ७०२०
ददौ किरीटं कृष्णाय शक्रोऽमृतसमुद्भवं । प्रीतात्मा कुरुशार्द्दूल कुण्डलद्वयमेव च ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पञ्चविंशदधिकशतोऽध्यायः ॥ १२५ ॥
॥ जनमेजय उवाच ॥ पुण्यकानां ममोत्पत्तिं कथयस्व तपोधन । द्वैपायनप्रसादेन सर्व्वं हि विदितं तव ।
॥ वैशम्पायन उवाच ॥ उमया पुण्यकविधिर्नरेन्द्रोत्पादितः पुरा । शृणु येन विधानेन लोके धर्मभृताम्वर ।
स्वर्गान्नीते पारिजाते कृष्णेनाक्लिष्टकर्म्मणा । ययौ द्वारवतीं धीमान्नारदो मुनिसत्तमः ।
देवासुरे नृपश्रेष्ठ संग्रामे समुपस्थिते । षट्पुरस्य वधे घोरे महादेवाज्ञयाऽनघ । ७०२५
कृष्णेन सहितं विप्रं नारदं धर्म्मवित्तमं । आसीनं परिपप्रच्छ रुक्मिणी भैष्मकी नृप ।
ततो जाम्बवती देवी सत्यभामा च भाविनी । गान्धारराजपुत्री च योगयुक्ता नराधिप ।
देव्यस्च नृप कृष्णस्य वह्व्योऽन्या वै समागताः । कुलशीलगुणोपेता धर्म्मशीलाः पतिव्रताः ।
॥ रुक्मिण्युवाच ॥ मुने धर्म्मभृतां श्रेष्ठ सर्व्वज्ञ वदताम्वर । उत्पत्तिं पुण्यकानां त्वं वक्तुमर्हसि सुव्रत ।
विधिञ्च फलयोगञ्च दानं कालं तथैव च । कौतूहलं नः परमं तच्छिन्धि द्विपदाम्वर । ७०३०
॥ नारद उवाच ॥ शृणु वैदर्भि धर्म्मज्ञे सपत्नीभिः सहानघे । पुण्यकानां विधिः प्रोक्तो यथा देवि पुरा मया ।
चचारोमा व्रतं देवी पुण्यकार्थं शुचिव्रता । व्रतावसानेऽथ तया सख्यो देवि निमन्त्रिताः ।
अदित्याद्याः सुताः सर्व्वा दक्षस्याक्लिष्टकर्म्मणः । पौलोमी च शची देवी ख्याता लोके पतिव्रता ।
रोहिणी च महाभागा सोमस्य दयिता सती । फाल्गुनी च तथा पूर्व्वा रेवती च विशाम्पते ।
तथा शतभिषा चैव मघा च कुरुनन्दन । एताभिर्हि महादेवी पूर्व्वमाराधिता सति । ७०३५
गङ्गा सरस्वती चैव वेणगङ्गा च निम्नगा । तथा वैतरणी चैव गण्डकी चैव भारत ।
अन्याश्च सरितो रम्या लोपामुद्रा च भारत । सत्यश्चान्या जगद्देवि धारयन्ति हि ताः शुभाः ।
शुभाश्च गिरिनन्दिन्यो वह्निकन्याश्च सुव्रताः । स्वाहा चाग्निप्रिया देवी सावित्री च यशस्विनी ।
ऋद्धिः कुवेरकान्ता च जलेशमहिषी तथा । भार्य्या पितृपतेश्चैव वसुपत्न्यस्तथैव च ।
श्रीर्ह्रीर्धृतिस्तथा कीर्त्तिराशा मेधा च सुव्रता । प्रीतिर्म्मतिश्च ख्यातिश्च सन्नतिश्च तपोधनाः । ७०४०
देव्यः सत्यस्तथैवान्याः सर्व्वभूतहिते रताः । तासां व्रतावसाने च पूजाश्चक्रेऽम्बिका तथा ।

तिलरत्नमयं दत्त्वा पर्व्वतं सर्व्वधान्यवत्। वासोभिर्म्बहुभिर्मुख्यैर्नानारागैः सुमध्यमे।
प्रतिग्टह्य च तां पूजां दत्तां देव्या तपोधनाः। उपविष्टाः कथाश्चित्राः कुर्व्वत्यो भर्तृदैवते।
पुण्यकार्थं कथास्तासामासन् देवो शशंस याः। विधिश्च पुण्यकस्याथ सतीनां भर्तृदैवते।
तासां मतेन साध्वीनां सर्व्वासां सोमनन्दिनी। पर्य्यपृच्छदुमां देवीं पुण्यकानां विधिम्वरं।
उमा तासां प्रियार्थन्तु पुण्यकान्यब्रवीत्तदा। समवं मम वैदर्भि सर्व्वभूतहिते रता।
ममैव चोमया दत्तः स तदा रत्नपर्व्वतः। प्रतिग्टह्य मया चैव कृतो ब्राह्मणसाच्छुभे।
उमा त्वरुन्धतीं साध्वीमामन्त्र्येदमभाषत। शृणु कल्याणि वक्ष्यामि सर्व्वाभिः सहिता शुभे।
पुण्यकानां विधिं कृत्स्नं यथावदनुपूर्व्वशः। यथा देवि मया दृष्टः पुरा ह्येष विधिः शुभे।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पुण्यकविधौ षट्त्रिंशदधिकशततोऽध्यायः॥ १२६ ॥
॥ उमोवाच ॥ सर्व्वज्ञाहं यदा भर्त्तुः प्रसादेन शुचिस्मिते। तदा पुरा मया दृष्टः पुण्यकानां विधिः शुभः।
सनातनः पुण्यविधिरिति बुद्ध्याऽवगम्यतां। महादेवप्रसादेन मया दृष्टस्त्वरुन्धति।
पुण्यकानि च सर्व्वाणि चीर्णवत्यस्म्यनिन्दिते। अनुज्ञया भगवतो भर्त्तुः सर्व्वस्य धीमतः।
सतीत्वं धर्म्मचरणं यस्या नित्यमखण्डितं। पुण्यकानां विधिस्तस्याः पुराणे परिकीर्त्तितः।
दानोपवासपुण्यानि सुकृतान्यप्यरुन्धति। निष्फलान्यसतीनान्तु पुण्यकानि तथा शुभे।
या वञ्चयन्ति भर्त्तारं योनिदुष्टा ह्यसत्स्त्रियः। न तु तासां पुण्यफलमस्ति ता निरयङ्गमाः।
साध्व्यो जगद्धारयन्ति सुशीलाः पतिदेवताः। अनन्या धर्म्मनित्याश्च सतां पन्थानमाश्रिताः।
अवाग्दुष्टाः शौचयुक्ता धृतिमत्यः शुभव्रताः। सततं साधुवादिन्यो धारयन्ति जगत् खलु।
व्याधितः पतितो वाऽपि दीनो वाऽपि कथञ्चन। न त्यक्तव्यः स्त्रिया भर्त्ता धर्म्म एष सनातनः।
अकार्य्यकारिणं वाऽपि पतितं वाऽपि निर्गुणं। स्त्री पतिन्तारयत्येव यथात्मानं शुभानने।
योनिदुष्टे स्त्रिया नास्ति प्रायश्चित्तं हतैव सा। वाग्दुष्टे विहितं सद्भिः प्रायश्चित्तं पुरातने।
भर्त्तुश्छन्देन कर्त्तव्यं व्रतकं सर्व्वदा स्त्रिया। उपवासोऽपि वा धन्ये काङ्क्षन्त्या सुकृताकृतिं।
कल्पान्तरसहस्रेषु न स्त्री सा लभते गतिं। तिर्य्यग्योनिसहस्रेषु पच्यते योनिविप्लवात्।
यदि सा नाम मानुष्यं स्त्री लभेदसती सती। चाण्डालयोनौ दुर्म्मेधा जायते कुक्कुराशना।
भर्त्ता देवः सदा स्त्रीणां सद्भिर्दृष्टस्तपोधने। यस्या हि तुष्यते भर्त्ता सा सती धर्म्मचारिणी।
कौतूहलहतानान्तु स्त्रीणां लोको न शोभनः। भर्त्तर्य्येव मनो यासां सद्भावेन व्यवस्थितं।
कर्म्मणा मनसा वाचा पतिं नातिचरन्ति याः। तासां पुण्यफलं सौम्ये पुण्यकैः समुदाहृतं।
पुण्यकानां विधिं कृत्स्नमतः प्रभृति शोभने। निबोध सह सर्व्वाभिर्दृष्टो यस्तपसा मया।
स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती। उपवासार्थमथ वा व्रतकार्थं धृतव्रते।
श्वशुराभ्याञ्च चरणौ सततं वन्दनस्य च। गृहीत्वौडुम्बरं पात्रं सकुशं साक्षतं तथा।
गोशृङ्गं दक्षिणं सिच्य प्रतिग्टह्णीत तज्जलं। ततो भर्त्तुः सती दद्यात् स्नातस्य प्रयतस्य च।

आत्मनोऽपि निषेक्तव्यं ततः शिरसि तज्जलं । त्रैलोक्ये सर्व्वतीर्थेषु स्नानमेतदुदाहृतं ।
उपवासेषु कर्त्तव्यमेतद्धि व्रतकेषु च । स्नानमेतद्धि सामान्यं स्त्रीणां पुंसाञ्च भामिनि ।
अरुन्धति मया दृष्टं तपसा हरतेजसा । अशस्त्रविद्धं शयनमासनञ्च तथाविधं ।
स्वयं प्रक्षालनञ्चापि पादयोरनुशब्दितं । अश्रुप्रपातो रोषश्च कलहश्च हतः सति ।
उपवासाद्व्रताच्चापि सद्यो भ्रंशयति स्त्रियः । शुक्लमेव सदा वासः प्रशस्तञ्चन्द्रसम्भवे । ७०७५
अन्तर्द्धारकञ्चैव उपवासे व्रते तथा । पादुकार्थं तृणैः कार्य्यं सर्व्वदा व्रतके सति ।
उपवासेऽपि च विधिरेष एव प्रकीर्त्तितः । प्रसादनञ्चाञ्जनञ्च गन्धान् सुमनसस्तथा ।
व्रतके चोपवासे च नित्यमेव विवर्ज्जयेत् । दन्तकाष्ठं शिरःस्नानमुद्वर्त्तनमथापि च ।
विवर्ज्जितं सदा सर्व्वं शौचार्थन्तु विधीयते । विल्वामलकफलैः शुद्धैः स्नानञ्चैव समाचरेत् ।
प्रक्षालनं वै शिरसः सदा मृण्मिश्रितैर्जलैः । शिरसोऽभ्यञ्जनं धर्म्ये नैव तावत् प्रशस्यते । ७०८०
पादयोर्न च गात्रस्य स्नेहेनेति स्थितिः स्मृता । गोयानमुष्ट्रयानञ्च खरयानञ्च वर्ज्जयेत् ।
नग्नस्नानञ्च सततं न व्रते ह्युपवासके । नदीजलेन स्नानञ्च प्रशस्तं सोमनन्दिनि ।
शुभे तडागवाप्यादौ विस्तीर्णे जलसंयुते । गत्वा स्नानं प्रशस्तन्तु सदैव खलु सर्व्वथा ।
अलाभे लवरुद्धा स्त्री घटस्नानं समाचरेत् । नवैश्च कुम्भैः स्नातव्यं विधिरेष सनातनः ।
स्नानन्तु शिरसि दृष्टं मया दृष्टं तपोबलात् । ७०८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पुण्यकविधौ सप्तत्रिंशदधिकशततोऽध्यायः ॥ १३७ ॥

॥ उमोवाच ॥ विधिनैतेन कृत्स्नेन स्त्री सदा भर्तृदेवता । चरेत् संवत्सरं दान्ता षण्मासान्मासमेव वा ।
स्त्रियो ह्यावाहयेत् साध्वीरेकादश समाधिना । स्वयञ्चैव विधिर्दृष्टो व्रतकानां मया शुभः ।
अर्च्चिर्दद्यात् सतीः सर्व्वा या मूलव्रतिनी भवेत् । तासान्तु निष्क्रयो देयः कालदेशानुरूपतः ।
ततो मासान्तशुक्लस्य तिथौ च नवमी तथा । आराधयित्वा कर्त्तव्यं व्रतकस्यापि वर्ज्जनं ।
उपवासमहोरात्रं त्रिरात्रञ्चापि निश्चिता । आदौ चान्ते च कुर्व्वीत व्रतकस्य सुसिद्धये । ७०९०
क्षुरकर्म्म ततो भर्त्तुरात्मनश्चैव कारयेत् । उत्सादनञ्च वपनं तस्मिन्नहनि संस्कृतं ।
ततो विवाहवत् स्नानं विहितं पुण्यके शुभे । मण्डनञ्चैव विहितं माल्यधारणमेव च ।
कुम्भैश्च स्नाप्यमानेमं साध्वी मन्त्रमुदीरयेत् । भर्त्तृपादौ नमस्कृत्य मनसा वाऽथ वा गिरा ।
आपो देव्य ऋषीणां विश्वधात्र्यो दिव्या मदन्त्यो याः शङ्करा धर्म्मराज्यः । हिरण्यवर्णाः पावकाः शिवतमेन रसेन श्रेयसे मां जुषन्तु ।
अपामेष स्मृतो मन्त्रः सर्व्वचान्यच्च मे शृणु । मन्त्राः पुराणविहिताः स्त्रीणां सर्व्वाङ्गशोभने । ७०९५
शुभाऽव्यया गुणिनी युक्तधर्म्मा भर्त्रा साकं कामदा स्यां वरेण्या । मा कर्म्मणा मनसा वाऽपि वाचा भर्त्तुर्भवेयं त्वपतो स्याञ्च वशगा ।
सपत्नीनामधि नित्यं भवेयं सुपुत्रा स्यां सुभगा चारुरूपा । सम्पन्नहस्ता गुणवादिनी च सर्व्वात्मना स्यामदरिद्रा भवेयं ।

पतिश्च मे स्यात् सुमुखो मत्प्रतीचो नित्यं मद्भक्तः स्यात्समतिर्मद्गतिश्च । प्रीतिश्च नौ स्याचक्रवाकानुरूपा मनो विरागो न भवेत्साधुत् च स्यात् ।

लोकान् साध्वीनामुत्तमानां व्रजेयं याभिः सर्व्वं धार्य्यते विश्वरूपं । उभे कुले याः शुभाः पावयन्ति पितुर्भर्त्तुश्च पतिभक्त्यैधिताः स्म ।

भूमिर्वायुर्जलमाकाशमग्निरन्तः चेतश्च प्रकृतिर्यो महांश्च । अहङ्कारश्च मम साच्ये नियुक्ताः सरेयुर्वै मुनयो निश्चयञ्च व्रतञ्च । ७८००

येराख्यो देहिनां भौतिकोऽयं विधिः सत्त्वाद्यैर्भूतयुक्तैः सवीजैः । सन्त्वेते मे साक्षिणः सर्व्वसंख्या व्रते चास्मिन्निश्चये चापि वृत्ते ।

चन्द्रादित्यौ पुष्पसाचो यमश्च दिशः सर्व्वा दश चात्मा च मेयं । सन्त्वेते वै साक्षिणः सर्व्व एव व्रते चास्मिन्निश्चये चापि वृत्ते ।

प्र

मन्त्रैरेतैः पुराणोक्तैः सर्व्वद्रव्याभिमन्त्रणं । व्रतचर्य्याप्रभृति वै पुराणे समुदाहृतं ।

स्नात्वाऽथ वाससी दद्यात् भर्त्तुः कर्त्ता स्वयं शुभे । अथात्मकर्त्तितं न स्याच्छुभे विप्रेन केनचित् ।

वासोऽन्यदेव दद्याच श्वेतं मुख्यं नवं शुचि । स्वकर्त्तितं सूचतन्तु वाससा तेन मिश्रयेत् । ७८०५

ततो द्विजं शुचिं दान्तं ज्ञानविज्ञानकोविदं । भोजयेच यथाशक्त्या सह भर्त्रा सुमध्यमे ।

ब्राह्मणस्यापि दातव्यं वासोयुग्मं महातपे । शय्या यानं गृहं धान्यं दासी दासस्तथैव च ।

अलङ्कारः शक्तितश्च रत्नपर्य्यंत एव च । सर्व्वधान्यैः समुन्मिश्रस्तिलैश्च सविशेषतः ।

वासोभिश्च प्रतिच्छन्नो नानावर्णैरलन्धति । हस्त्यश्वावचयश्चैव देया गौरेव वा ध्रुवं ।

लवणप्रतिमां दद्यान्नवनीतस्य चापरां । गुडस्य मधुनश्चैव सुवर्णस्य च शोभनां । ७८१०

तथैव सर्व्वगन्धानां रसानां पृथगेव च । तथा सुमनसां दद्याद्रुप्यस्योदुम्बरस्य च ।

फलानाश्चैव सर्व्वेषां वाससामपि नन्दिनि । चित्रप्रतिकृतिश्चैव काष्ठस्य प्रतिमान्तथा ।

शिलाप्रतिकृतिश्चैव दर्भोऽथ पयसस्तथा । सर्पिषा दूर्व्वया चैव याश्चान्यामप्यभीप्सति ।

कालदेशानुरूपञ्च देयं विभवतः सति । अल्पं वा बहुलं वाऽपि भर्त्तुश्छन्देन सर्व्वदा ।

तिलपात्रं प्रदातव्यं न देयं न तु शोभने । गौः सवत्सा प्रदातव्या कपिला कांस्यमेव च । ७८१५

कृष्णाजिनञ्च सुभगे सतिलं वाससाऽन्वितं । आदर्शश्चैव कूर्चश्च तथाऽजिनमनिन्दिते ।

एतद्दत्त्वा सर्व्वकामानाप्नोति वरवर्णिनि । पुरोधिका पुत्त्रवती सुभगा रूपभाविनी ।

मृष्टहस्ता धनाढ्या च स्त्री भवत्यमलेक्षणा । इच्छया लभते चैव कन्या रूपगुणान्विताः ।

भवन्ति सुभगाश्चाढ्यास्तथैव च पुरोधिकाः । पुत्त्रवत्यो धनाढ्याश्च शीलवत्यश्च नित्यदा ।

अरुन्धतिकृतं दान्ते मयैतत् प्रथमं व्रतं । उमाव्रतिकमित्येवं ख्यातं सान्तानिकं खलु । ७८२०

एतद्देवोत्तमं स्त्रीणां व्रतं तस्मात् समाचरेत् । सर्व्वकामानवाप्नोति स्त्री दत्त्वैतदनिन्दिते ।

एतद्व्रतकराज्ये च देवदेवो वृषध्वजः । पुराऽभिर्षिषिचे धीम्ये प्रियार्थं मम सर्व्वकृत् ।

व्रतकस्यावसाने तु देयं भोज्यञ्च नित्यदा। स्त्रीणां प्रदेयाः कामाश्च प्रहृष्टाः कान्त देशयोः।
एकैकस्य प्रदातव्यं व्रतकं वरवर्णिनि। इच्छातो ब्राह्मणानान्तु देयमन्नं सदक्षिणं।
पायसं तत्र दातव्यं व्रतके नान्यदिष्यते। नात्र प्राणिबधः कार्य्यः पुराणे नियता श्रुतिः। ७८२५
अथ द्वितीयं वक्ष्यामि व्रतकं सोमसप्रभे। महादेवप्रसादेन दृष्टवत्यस्मि यच्छुभे।
सर्व्वाः पुत्त्रफला नार्य्यः सद्भिरेतदुदाहृतं। तस्मादर्थिभ्यतीं दद्यात् सपुत्त्रकरकान् शुभे।
ज्येष्ठाषाढौ शुभौ मासौ पुरोक्तं विधिमाचरेत्। अथवा ज्येष्ठमेवैकमाषाढं वा समाचरेत्।
ततो मासद्वये पूर्णे मासे वा वरवर्णिनि। सपुत्त्रकरकान्दद्यात् फाणितप्रतिपूरितान्।
सर्पिषः पयसस्चैव दध्नोऽथ मधुनोऽनघे। जलस्य च तथा दद्यात् पूरयित्वा सुमध्यमे। ७८३०
एकस्मै ज्ञानवृद्धाय सुव्रताय जितात्मने। सपुत्त्रकरकान्दद्यात् यावन्तो मनसः प्रियाः।
इच्छेद्दुहितरं चेद्धि स्त्रीणां कामकरं ततः। किञ्चिद्द्रव्यं सुताकामा सुतां प्राप्नोत्यसंशयं।
गौर्व्वाऽथ काञ्चनं वाऽपि दक्षिणार्थं प्रशस्यते। विप्रस्याच्छादनं देयमवश्यञ्च शुचिस्मिते।
यज्ञोपवीतं व्रतके दद्यान्नारी शुचिव्रता। सपुत्त्रकरकाणान्तु विधिनैवं विपश्चिता।
अपत्याख्यानयोगेन ब्राह्मणेभ्यः शुचिव्रता। संवत्सरं सुपूर्णञ्च व्रतधर्म्मानुपालिनी। ७८३५
करकामपि दद्याच्च पूर्णे संवत्सरे शुभे। अनुज्ञया सदा भर्त्तुः सत्यवादिन्यहन्यति।
सुवर्णसूत्रं विप्राय कौमुद्यां दातुमर्हति। यज्ञोपवीतं विप्रस्य व्रतकं सार्व्वकामिकं।
यज्ञोपवीतं कनकं दक्षिणाञ्चापि शक्तितः। प्रयच्छती सती स्त्री हि सर्व्वान् कामान् समश्नुते।
नवं न भक्षयेत् किञ्चिन्नारी धान्यमयी फलं। पुष्पं वा नोपभुञ्जीत यावदेवं समाचरेत्।
एकभक्तेन धर्म्मज्ञे पुण्यकं कर्त्तुमर्हति। ब्राह्मणाय ततो देयं भर्त्तुश्च तदनन्तरं। ७८४०
एवं संवत्सरं कृत्वा सुभगा रूपशालिनी। भवत्यविधवा चैव स्त्री धनाढ्या तथैव च।
वार्त्ताकानि न खादेद्या स्त्री पूर्णं परिवत्सरं। न सा पुत्त्रविनाशं हि पश्यतीत्यवगम्यतां।
शाशकं मृगमांसञ्च नित्यमेव विवर्ज्जयेत्। नाप्नोति मरणं नारी चाप्नोति पतिदेवतां।
अलावूं वर्ज्जयेन्नारी तथैवोत्पादिकामपि। कलम्बीं काञ्चनं नाद्याद्या भर्त्तुः सुखमिच्छति।
पूर्णे संवत्सरे दद्यादेकैकं शाकमादितः। सुदक्षिणा पुत्त्रवती भवत्यपि पुरोधिका। ७८४५
स्वयं प्रक्षालयाना स्त्री स्वपादावेवमादितः। प्रतिष्ठां लभते नित्यमुद्वेगरहिता सती।
दिवा सूर्य्यस्य मार्गेण वर्त्तयेत् स्त्री पतिव्रता। एवं संवत्सरं पूर्णं रात्रावन्नं विवर्ज्जयेत्।
सा जीवपुत्त्रा सुभगा भवत्यमरवर्णिनी। अधितिष्ठति सर्व्वाश्च सपत्नीर्नात्र संशयः।
पूर्णे संवत्सरे दद्यात् सौवर्णं सूर्य्यमुत्तमं। ब्राह्मणायाभिरूपाय दरिद्राय यशस्विने।
फलानि चाथ पुष्पाणि भक्ष्याण्यपि च सुव्रता। दद्यादनस्तमितके चरितव्रतका तथा। ७८५०
अथ वाऽस्तंगते सूर्य्ये भुङ्क्ते स्त्री नियता सती। चन्द्रनक्षत्रपूतानि भोज्यानि वरवर्णिनि।
सा दद्यात् काञ्चनञ्चन्द्रं नक्षत्राणि ग्रहानपि। अभिरूपाय विप्राय वासश्च लवणान्वितं।

चन्द्रशीतलगात्री सा भवत्यमरवर्णिनी। सुभगा दर्शनीया च पुत्त्रवत्यपि भाविनी।
पौर्णमास्यान्तु सततं प्राप्ते सोमोदयेऽङ्गना। अर्घं दद्यात् सुमनसां साचतं सकुशं तथा।
यावकञ्च बलिं कुर्य्याद्दधिना सह संयुतं। एवं या कुरुते नित्यं सर्व्वान् कामानवाप्नुयात्। ७८५५
अदृष्ट्वा या तु नाश्नाति सूर्य्यं नारी पतिव्रता। दुर्द्दिने वाऽथ वा व्यभ्रे सेष्टान् कामानवाप्नुते।
काञ्चनं शक्तितो दद्यात् सा विप्राय मनस्विनी। सुभगा दर्शनीया च भवत्यमरवर्णिनी।
इति श्रीमहाभारते खिलेषु हरिवंशे पारिजातहरणे पुण्यकविधौ अष्टात्रिंशदधिकशततोऽध्यायः॥ १३८ ॥
॥ भगवत्युवाच ॥ निर्व्विष्टव्यं शरीरं यैश्नतकैः पुण्यकैरपि। स्वस्त्यति प्रवच्यामि सहैताभिर्व्वरे शृणु।
कृष्णाष्टमीं या चपति स्वाद्वा मूलफलाशना। ब्राह्मणायैकमशनं सा दत्त्वा भर्त्तृदेवता।
शुक्लवस्त्रा शुभाचारा गुरुदैवतपूजिका। एवं संवत्सरं कृत्वा ततो दद्याद्द्विजातये। ७८६०
गोवालरज्जुखड्गं चामरञ्च ध्वजं तथा। दक्षिणापूर्व्वमिष्टान्नं शक्त्या वाऽपि शुचिव्रते।
ऊर्म्मिमन्तः स्वरालापाः श्रोणिदेशावलम्बिनः। तस्या भवन्ति केशास्तु भक्तिमत्या हि भर्त्तरि।
शिरो निर्व्विष्टुकामा तु गोमयेन शिरः सती। प्रचालयेन्मलं कृत्वा पयसा श्रीफलेन च।
गोमूत्रञ्च सदा प्राशेच्छिरःस्नानञ्च निश्चयेत्। कृष्णां चतुर्द्दशीमेतत् कर्त्तव्यं वरवर्णिनि।
भवत्यविधवा चैव सुभगा विज्वरा तथा। शिरोरोगैश्च नैवास्याः शरीरमभितप्यते। ७८६५
दर्शनीयं ललाटं या स्त्री काङ्क्षति शुचिस्मिते। तिथिं प्रतिपदं नित्यं सा चरेदेकभोजना।
पयसा च तथाऽश्नीयाद्यावत् संवत्सरो गतः। ब्राह्मणस्य तया दद्यात् पट्टं रूप्यमयं शुभं।
ललाटं रूपसम्पन्नं तेनाप्नोत्यङ्गना सती। द्वितीयां स्त्री सदा सौम्ये भ्रुवौ रिच्छेत् सुरूपतां।
अनन्तरोपवासेन शाकभक्ताशना सती। ततः संवत्सरे पूर्णे ब्राह्मणान् स्वस्ति वाचयेत्।
फलैः परिणतैः सौम्ये माषाणां दक्षिणान्वितैः। लवणेन च भद्रन्ते घृतमात्रेण चानघे। ७८७०
भ्रुवौ विधाय सा दद्यान्मृगनाभिमये शुभे। श्रवणौ रूपसम्पन्नाविच्छन्ती स्त्री सुमध्यमे।
नक्षत्रे श्रवणे प्राप्ते ध्रुवं भुञ्जीत यावकं। ततः संवत्सरे पूर्णे कर्णौ दद्याद्धिरण्मयौ।
घृते प्रक्षिप्य विप्राय पयसा सहिते शुभे। नासामिच्छेल्ललाटान्तां मध्यनावधिवर्ज्जिताम्।
तिलगुल्मं सदा सिञ्चेद्यावत् पुष्पैर्हि रचितः। अनन्तरोपवासेन सेकार्थः सलिलैः सदा।
तस्मादादाय पुष्पाणि घृते प्रक्षिप्य दापयेत्। सची भवेयमिति या स्त्री काङ्क्षेद्रम्भोरु सुन्दरे। ७८७५
अनन्तरं सा भुञ्जीत पयसा वा घृतेन वा। ततः संवत्सरे पूर्णे पद्मपत्राणि पण्डिता।
तथैवोत्पलपत्राणि न्यसेत् चीरे शुचिस्मिते। स्रवमानानि विप्राय ततो दद्यात् सती सति।
कृष्णसारसमानाक्षी स्त्री दत्त्वा भवति स्म वै। इच्छेदोष्ठौ चारुरूपौ या स्त्री धर्म्मगुणान्विते।
सा म्लपयेन च पिबेदुदकं वत्सरं सती। अयाचितेन भुञ्जीत नवम्यां धर्म्मभागिनी।
ततः संवत्सरे पूर्णे विद्रुमं दातुमर्हति। तेन बिम्बफलाभोष्ठी स्त्री भवत्येव शोभने। ७८८०
सुभगा च वपुःपुत्त्रधनाढ्या गोमती तथा। या चारुरूपानिच्छेत दन्तानमरवर्णिनि।

॥ उमोवाच ॥ बान्धवान् स्वगुणानिच्छन्त्येकभक्तेन नित्यदा । सप्तमीं सप्तमीं नित्यं क्षपयेत् स्त्री पतिव्रता ।
ततः संवत्सरे पूर्णे वृत्तं दद्याद्धिरण्मयं । सदक्षिणं ब्राह्मणाय शुभबन्धुमती भवेत् ।
करञ्जे दीपकं दद्यात् सदा या प्रमदावरे । पूर्णे संवत्सरे दद्यात् सौवर्णं दीपकं ततः ।
रूच्या सा स्त्री भवेद्भर्त्तुरिष्टा पुत्त्रवती तथा । सपत्नीनामधि तथा दीपवज्ज्वलते शुभे ।
या शेषभोजिनी नित्यं नैव च स्यादरुन्तुदा । न चस्याद्दुर्मना सौम्ये नित्यञ्च पतिदेवता । ७९१५
शौचान्विता च सततं न च रूक्षाभिभाषिणी । श्वश्रूश्वशुरयोर्नित्यं शुश्रूषानिरता सती ।
किं तस्या व्रतकैः कृत्यं किं वा स्यादुपवासकैः । या भर्तृदेवता नित्यं सत्यधर्म्मगुणान्विता ।
विधवा स्त्री तु या हि स्याद्दैवयोगात् सती सति । तस्या वक्ष्यामि यो धर्म्मः पुराणोक्तः सुमध्यमे ।
पतिं संकल्पयित्वा सा चित्रस्थं वाऽथ मृण्मयं । तस्य पूजां सदा कुर्य्यात्सतां धर्म्ममनुस्मरेत् ।
तत एवाभ्यनुज्ञाञ्च नित्यं याचेत सुव्रता । व्रतके चोपवासे च भोजने च विशेषतः । ७९२०
भर्तृलोकान् व्रजत्येवं न चेदतिक्रमेत् पतिं । शाण्डिली सूर्य्यवद्भाति सततं पतिदेवता ।
अद्य प्रभृति सर्व्वेषां देवानाञ्चैव योषितः । द्रक्ष्यन्ति पुण्यकविधिं पौराणे याः सनातनाः ।
मुनिश्च नारदः कृत्स्नं पौराणं ज्ञास्यते विधिं । उपवासस्य धर्म्मात्मा व्रतकानां तथैव च ।
अदितिश्चापि सेन्द्राणी लक्ष्म सोमसुते वरे । प्रवर्त्तनं पुण्यकानां व्रतकानाञ्च सर्व्वदा ।
कीर्त्तनीयाः सतीनां हि भविष्यथ गुणान्विताः । उपवासव्रतविधिं यथावदिह कृत्स्नशः । ७९२५
प्रादुर्भावेषु सर्व्वेषु भार्य्या विष्णोर्महात्मनः । ज्ञास्यन्ति पुण्यकविधिं नित्यमेव सनातनं ।
विशेषधर्म्मो धर्म्माणां स्त्रीधर्म्मेषु प्रशस्यते । पतिभक्तिरदुष्टत्वमवाग्दुष्टत्वमेव च ।
॥ नारद उवाच ॥ एवमुक्तास्तु ता देव्यो महादेव्या तपोधनाः । जग्मुर्हृष्टा महादेवीं प्रणिपत्य हरप्रियां ।
अदितिर्व्रतकञ्चक्रे शृणु यद्ब्रह्मचारिणी । उमाव्रतविधिः सर्व्वः पूर्व्वोद्दिष्टस्तया कृतः ।
पारिजाते निबध्याथ मम दत्तस्तु कश्यपः । अदितिर्व्रतकं चक्रे शृणु यद्ब्रह्मचारिणी । ७९३०
उमाव्रतविधिः सर्व्वः पूर्व्वोद्दिष्टस्तया कृतः । पारिजाते निबध्याथ मम दत्तस्तु कश्यपः ।
अदितिव्रतकं नाम तद्दत्तं सत्यभामया । तदेव व्रतकं दत्तं सावित्र्या धर्म्मनित्यया ।
तैरेव युक्तैः संयुक्तमिदं त्वभ्यधिकं कृतं । सन्ध्याकाले च संप्राप्ते स्थाने स्थाने तथैव च ।
पूजनं वा नमस्कारो जपश्च द्विगुणः स्मृतः । सावित्रीव्रतकं कृत्वा तयादितिव्रतं सती ।
भर्त्तुः कुलं पितृकुलमात्मानञ्चैव तारयेत् । इन्द्राणी व्रतकञ्चक्रे तदेवेमं यथाविधि । ७९३५
रक्तमभ्यधिकं वासो भोजनञ्चैव सामिषं । चतुर्थे दिवसे चापि पुण्यकार्य्यं विधिः स्मृतः ।
अहोरात्रोपवासश्च देयं कुम्भव्रतं तदा । गङ्गया व्रतकं दत्तं तदेवेमं यशस्करि ।
स्नानमभ्यधिकं कार्य्यं प्रत्यूषस्यात्मनो जले । अन्यस्मिन् वा जले माघशुक्लपक्षे हरिप्रिये ।
एतद्गङ्गाव्रतं नाम सर्व्वकामप्रदं स्मृतं । सप्त सप्त च सप्ताथ कुलानि हरिवल्लभे ।
स्त्री तारयति धर्म्मज्ञा गङ्गाव्रतकचारिणी । देयं कुम्भसहस्रञ्च गङ्गाया व्रतके शुभे । ७९४०

तारणं पारणञ्चैव तद्व्रतं सार्व्वकामिकं । यमभार्य्या चकाराथ व्रतं यामरथं शुभं ।
हेमन्ते तत्तु कर्त्तव्यमाकाशे हरिवल्लभे । इमानि चैव वाक्यानि ब्रूयादाकाशमास्थिता ।
स्नाता शुचिसमाचारा नमस्कृत्य पतिं शुभे । चराम्यहं यामरथं हिमं पृष्ठेन धारये ।
पतिव्रता जीवपुत्त्रा भवेयञ्च पुरोधिका । सपत्नीश्चाधितिष्ठेयं पश्येयञ्चैव मा यमं ।
सभर्त्तृपुत्त्रा जीवेयं चिरं सुसुखमेव च । पतिलोकञ्च गच्छेयं भवेयं धनिनी तथा । ७९४५
सुचेला मृष्टहस्ता च स्वजनेष्टा गुणान्विता । एवं कृत्वा ततो विप्रं मधुना स्वस्ति वाचयेत् ।
तिलैरपि तथा कृष्णैः पायसेन तु भोजयेत् । एवं व्रतानि देवीभिः कृतान्यमरवर्द्धिनि ।
महादेव्या पुरोक्तानि रुद्रपत्न्या हरिप्रिये । अहं ब्रवीमि तपसा महीयेन समन्विताः ।
सर्व्वा द्रक्ष्यथ पुण्यानि व्रतकानि तथैव च । पौराणान्युमया देव्या यानि दृष्टानि वै पुरा ।
कल्याणगुणयुक्तानि पावनानि शुभानि च । ७९५०
॥ वैशम्पायन उवाच ॥ रुक्मिणी व्रतकञ्चक्रे दृष्ट्वा व्रतकविस्तरं । उमया वरदानेन दृष्ट्वा दिव्येन चक्षुषा ।
उमाव्रतकवत् सर्व्वं वृषदानं तथाऽधिकं । रत्नमालाप्रदानञ्च तथाऽन्नं सार्व्वकामिकं ।
तथा जाम्बवती चक्रे पुरोमाव्रतकं यथा । ददावभ्यधिकं सा तु रत्नवृक्षं मनोहरं ।
सत्या ददौ तथैवाथ पुरोमाव्रतके यथा । पीतमभ्यधिकं वासस्तया दत्तमुमाव्रते ।
रोहिण्या चाथ फाल्गुन्या मघया च पुरातने । व्रतानि खलु दत्तानि वर्द्धनि कुलनन्दने । ७९५५
ददौ शतभिषा चैव व्रतकं पुण्यलक्षणं । येन नक्षत्रमुख्यत्वं जगाम कुरुनन्दन ।
इति श्रीमहाभारते खिलेषु हरिवंशे पारिजातहरणे उमाव्रतके चत्वारिंशदधिकशततोऽध्यायः ॥ १४० ॥
॥ जनमेजय उवाच ॥ वैशम्पायन धर्म्मज्ञ व्यासशिष्य तपोधन । पारिजातस्य हरणे षट्पुरं परिकीर्त्तितं ।
निवासोऽसुरमुख्यानां दारुणानां तपोधन । तेषां वधं मुनिश्रेष्ठ कीर्त्तयस्वान्धकस्य च ।
॥ वैशम्पायन उवाच ॥ त्रिपुरे निहते वीरे रुद्रेणाक्लिष्टकर्म्मणा । तत्रायुधाना बहवो बभूवुरसुरोत्तमाः ।
शराग्निना न दग्धास्ते रुद्रेण त्रिपुरालयाः । षष्टिं शतसहस्राणि न न्यूनाभ्यधिकानि तु । ७९६०
ते ज्ञातिबधसन्तप्तास्चक्रुर्व्वीराः पुरा तपः । जम्बूमार्गे सताभिष्टे महर्षिगणसेविते ।
आदित्याभिमुखा वीराः सहस्राणां शतं समाः । वायुभक्षा नृपश्रेष्ठ स्तुवन्तः पद्मसम्भवं ।
तेषामुडुम्बरं राजन् गण एकः समाश्रितः । वृक्षं तत्रावसन् वीरास्ते कुर्व्वन्तो महत्तपः ।
कपित्थवृक्षमाश्रित्य केचित्तत्रोषिताः पुरा । शृगालवाटीस्त्वपरे चेरुरुग्रं तथा तपः ।
वटमूले तथा चेरुस्तपः कौरवनन्दन । अधीयन्तोऽपरे ब्रह्म वटं गत्वाऽसुरात्मजाः । ७९६५
तेषां तुष्टः प्रजाकर्त्ता नरदेव पितामहः । वरं दातुं सुरश्रेष्ठः प्राप्तो धर्म्मभृताम्वरः ।
वरं वरयतेत्युक्तास्ते राजन् पद्मयोनिना । ते नेषुर्व्वरदानं तद्द्विषन्तस्त्र्यम्बकं विभुं ।
इच्छन्तोऽपचितिं गन्तुं ज्ञातीनां कुरुनन्दन । तानुवाच ततो ब्रह्मा सर्व्वज्ञः कुरुनन्दन ।
विश्वस्य जगतः कर्त्तुः संहर्त्तुस्च महात्मनः । कः शक्तोऽपचितिं गन्तु माऽस्तु वोऽत्र वृथा श्रमः ।

अनादिमध्यनिधनः सोमो देवो महेश्वरः। तमस्तुय सुखं स्वर्गे वस्तुमिच्छन्ति येऽसुराः। ७९७०
ते नेषुस्तत्र केचित्तु दुरात्मानो महासुराः। अयेषुरपरे राजन्नसुरा भव्यभावनाः।
नेषुर्ये तु दुरात्मानस्तानुवाच पितामहः। वरयध्वं वरं वीरा रुद्रक्रोधहृते ऽसुराः।
त ऊचुः सर्व्वदेवानामवध्याः स्यामहे विभो। पुराणि षट् च नो देव भवत्वन्तर्महीतले।
सर्व्वकामसमृद्धार्थं षट्पुरं चास्तु नः प्रभो। वयञ्च षट्पुरं गत्वा वत्स्याम च सुखं प्रभो।
रुद्रादुग्रं भयं न स्याद्येन नो ज्ञातयो हताः। निहतं त्रिपुरं दृष्ट्वा भीताः स्म तपसां निधे। ७९७५
॥ पितामह उवाच ॥ असुरा भवतावध्या देवानां शङ्करस्य च। न बाधिष्यथ चेद्विप्रान् सत्पथस्थान् सतां प्रियान्।
विप्रोपघातं मोहाच्चेत् करिष्यथ कथञ्चन। नाशं यास्यथ विप्रा हि जगतः परमा गतिः।
नारायणाद्वो भेतव्यं कुर्व्वद्भिर्ब्राह्मणाहितं। सर्व्वभूतेषु भगवान् हितं धत्ते जनार्द्दनः।
ते गता असुरा राजन् ब्रह्मणाऽथ विसर्ज्जिताः। येऽपि भक्ता महादेवमसुरा धर्म्मचारिणः।
स्वयं हि दर्शनं तेषां ददौ त्रिपुरनाशनः। श्वेतं वृषभमारुह्य सोमः सप्रवरः प्रभुः। ७९८०
उवाच चेदं भगवानसुरान् स सताङ्गतिः। वैरमुत्सृज्य दम्भञ्च हिंसाञ्चासुरसत्तमाः।
मामेव चाश्रितास्तस्माद्वरं साधु ददामि वः। यैर्दीक्षिताः स्थ मुनिभिः सत्क्रियापरमैर्द्विजैः।
सह तैर्गम्यतां स्वर्गः प्रीतोऽहं वः स्वकर्म्मणा। इह ये चैव वत्स्यन्ति तपसा ब्रह्मवादिनः।
अपि कापित्थिकास्त्वेते तेषां लोका यथा मम। इह मासान्तपचान्तौ यः करिष्यति मानवः।
वानप्रस्थेन विधिना पूजयन्मां तपोधनः। वर्षाणान्तु सहस्रस्य तपसां प्राप्यते फलं। ७९८५
कृत्वा चिराच्च विधिवत्तस्यते चेप्सितां गतिं। अर्कद्वीपे निवसतो द्विगुणं तद्भविष्यति।
नीचे देशे च भद्रं वो वरमेतं ददाम्यहं। श्वेतवाहननामानं यश्च मां पूजयिष्यति।
सर्व्वतो भयचित्तोऽपि गतिं स मम यास्यति। औडुम्बरान् वाटमूलान् द्विजान् कापित्थिकानपि।
तथा शृगालवाटीयान्धर्म्मात्मानो दृढव्रतान्। मुनींश्च ब्रह्मवाटीयान् सविशेषेण ये नराः।
पूजयिष्यन्ति सततं ते यास्यन्तीप्सितां गतिं। इत्युक्त्वाऽथ महादेवो भगवान् श्वेतवाहनः। ७९९०
तैरेव सहितः सर्व्वैरुद्रलोकं जगाम वै। जम्बूमार्गं गमिष्यामि जम्बूमार्गे वसाम्यहं।
एवं संकल्पयानोऽपि रुद्रलोके महीयते।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे एकचत्वारिंशदधिकशततोऽध्यायः॥ १४१ ॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु चतुर्व्वेदः षडङ्गवित्। ब्राह्मणो याज्ञवल्क्यस्य शिष्यो धर्म्मगुणान्वितः।
ब्रह्मदत्तेति विख्यातो विप्रो वाजसनेयिनां। अश्वमेधः कृतस्तेन वसुदेवस्य धीमतः।
स सांवत्सरदीक्षायां दीक्षितः षट्पुरालये। आवर्त्तायाः शुभे तीरे सुनद्या मुनिजुष्टया। ७९९५
सखा च वसुदेवस्य सहाध्यायी द्विजोत्तमः। उपाध्यायस्य कौरव्य चीरहेतोर्म्महात्मनः।
वसुदेवस्तत्र यातो देवक्या सहितः प्रभो। यजमानं षट्पुरस्थं यथा शक्रो बृहस्पतिं।
तत् सत्रं ब्रह्मदत्तस्य बह्वन्नं बहुदक्षिणं। उपासन्त मुनिश्रेष्ठा महात्मानो दृढव्रताः।

व्यासोऽहं याज्ञवल्क्यश्च सुमन्तुर्जैमिनिस्तथा । श्रुतिमान् जाजलिश्चैव देवलाद्याश्च भारत ।
श्रद्धयाऽनुरूपया युक्तं वसुदेवस्य धीमतः । यथेप्सितान् ददौ कामान् देवकी धर्म्मचारिणी । ८०००
वासुदेवप्रभावेण जगत्सर्वं महीतले । तस्मिन् सत्रे वर्त्तमाने दैत्याः षट्पुरवासिनः ।
निकुम्भाद्याः समागम्य तमूचुर्वरदर्पिताः । कार्य्यतां यज्ञभागो नः सोमं पास्यामहे वयं ।
कन्याश्च ब्रह्मदत्तो नो यजमानः प्रयच्छतु । अङ्गः सन्त्यस्य कन्याश्च रूपवत्यो महात्मनः ।
श्राहूय ताः प्रदातव्याः सर्व्वथैव हि नः श्रुतं । रत्नानि च ब्रह्मदत्तो विशिष्टानि ददातु नः ।
अन्यथा न तु यष्टव्यं वयमाज्ञापयामहे । एतच्छ्रुत्वा ब्रह्मदत्तस्तानुवाच महासुरान् । ८००५
यज्ञभागो न विहितः पुराणे ऽसुरसत्तमाः । कथं सत्रे सोमपानं शक्यं दातुं मया हि वः ।
पृच्छतेह मुनिश्रेष्ठान् वेदभाष्यार्थकोविदान् । कन्या हि मम या देयास्ताश्च संकल्पिता मया ।
अन्तर्वेद्यां प्रदातव्याः सदृशानामसंशयं । रत्नानि तु प्रयच्छामि सान्त्वेनाहं विचिन्त्यतां ।
बलान्नैव प्रदास्यामि देवकीपुत्त्रमाश्रितः । निकुम्भाद्यास्तु रुषिताः पापाः षट्पुरवासिनः ।
यज्ञवाटं विलुलुपुजह्रुः कन्याश्च तास्तथा । तं दृष्ट्वा सत्रमुत्पन्नन्तु दध्यावानकदुन्दुभिः । ८०१०
वासुदेवं महात्मानं बलभद्रं गदं तथा । विदित्वाऽथ ततः कृष्णः प्रद्युम्नमिदमब्रवीत् ।
गच्छ कन्यापरित्राणं कुरु पुत्त्राशु मायया । यावद्यादवसैन्येन षट्पुरं यान्यहं प्रभो ।
स ययौ षट्पुरं वीरः पितुराज्ञाकरस्तदा । निमेषान्तरमात्रेण गत्वा कार्ष्णिर्महाबलः ।
कन्यास्ता मायया धीमानाजह्रे स महाबलः । मायामयीश्च कृत्वाऽन्या न्यस्तवान्रुक्मिणीसुतः ।
मा भैरिति च धर्म्मात्मा देवकीमुक्तवांस्तदा । मायामयीस्तु ता हृत्वा सुतास्तस्य दुरासदाः । ८०१५
षट्पुरं विविशुर्दैत्याः परितुष्टा नराधिप । कर्म्म चासार्थ्यते तत्र विधिदृष्टेन कर्म्मणा ।
यद्विशिष्टं बहुगुणं तदभूच्च नराधिप । एतस्मिन्नन्तरे प्राप्ता राजानस्तत्र भारत ।
सत्रे निमन्त्रिताः पूर्व्वं ब्रह्मदत्तेन धीमता । जरासन्धो दन्तवक्रः शिशुपालस्तथैव च ।
पाण्डवा धार्त्तराष्ट्राश्च मालवास्तनयास्तथा । रुक्मी चैवाकृतिश्चैव नीलो नार्म्मद एव च ।
विन्दानुविन्दावावन्त्यौ शल्यः शकुनिरेव च । राजानश्चापरे वीरा महात्मानो दृढायुधाः । ८०२०
आवासिता नातिदूरे षट्पुरस्य च भारत । तान्दृष्ट्वा नारदः श्रीमानचिन्तयदनिन्दितः ।
अत्रास्य यादवानाञ्च भविष्यति समागमः । अत्र हेतुरयं युद्धे तस्मात्तत्प्रयताम्यहं ।
एवं सञ्चिन्तयित्वा तु निकुम्भभवनं गतः । पूजितः स निकुम्भेन दानवैश्च तथाऽपरैः ।
उपविष्टः स धर्म्मात्मा निकुम्भमिदमब्रवीत् । कथं विरोधं यदुभिः कृत्वा स्वस्थैरिहास्यते ।
यो ब्रह्मदत्तः स कृष्णः स हि तस्य विभुः सखा । शतानि पञ्च भार्य्याणां ब्रह्मदत्तस्य धीमतः । ८०२५
आनीता वसुदेवस्य सुतस्य प्रियकाम्यया । शतद्वयं ब्राह्मणीनां राजन्यानां तथा शतं ।
वैश्यानां शतमेकञ्च शूद्राणां शतमेव च । ताभिः शुश्रूषितो धीमान्दुर्व्वासा धर्म्मवित्तमः ।
तेन तासां वरो दत्तो मुनिना पुण्यकर्म्मणा । एकैकस्तनयो राजन्नेकैका दुहिता तथा ।

रूपेणानुपमाः सर्व्वा वरदानेन धीमतः। कन्या भवन्ति तत्र यास्तास्तास्सुर पुनः पुनः।
सङ्गमे सङ्गमे वीर भर्तृभिः शयने सह। सर्व्वपुष्पमयं गन्धं स्रवन्ति च वराङ्गनाः। ८०१०
सर्व्वदा यौवने न्यस्ताः सर्व्वाश्चैव पतिव्रताः। सर्व्वा गुणैरप्सरसां गीतनृत्यगुणोदयं।
जानन्ति सर्व्वा दैतेय वरदानेन धीमतः। पुत्राश्च रूपसम्पन्नाः शास्त्रार्थकुशलास्तथा।
स्वे स्वे स्थिता वर्णधर्म्मे यथावदनुपूर्व्वशः। ताः कन्या नेममुख्यानां दत्ताः प्रायेण धीमता।
अवशेषं शतन्त्वेकं यदानीतं किल त्वया। तदर्थं यादवा वीर योधयिष्यन्ति सर्व्वथा।
साहाय्यार्थन्तु राजानो व्रियन्तां हेतुपूर्व्वकं। ब्रह्मदत्तसुतार्थञ्च रत्नानि विविधानि च। ८०१५
दीयन्तां भूमिपालानां साहाय्यार्थं महात्मनां। आतिथ्यं क्रियताञ्चैव ये समेष्यन्ति वै नृपाः।
एवमुक्ते तथा चक्रुरसुरास्तेऽतिहृष्टवत्। सम्बा पञ्चशतं कन्या रत्नानि विविधानि च।
यथार्हेण नरेन्द्रेस्ता विभक्ता भक्तिवत्सलाः। ततो पाण्डुसुतान् वीरान् वारिता नारदेन ते।
निमेषान्तरमात्रेण तत्र गत्वा महात्मना। तुष्टैश्चैरसुरा युक्ता राजन् भूमिपसत्तमैः।
सर्व्वाकामसमृद्धार्थैर्भवद्भिः स्वगमैः स्वयं। अर्च्चिताः स्म यथान्यायं यत्नं किं वः प्रयच्छतु। ८०२०
यत्नं नार्च्चितपूर्व्वं हि दिव्यैर्वीरैर्भवद्विधैः। निकुम्भोऽयामरोद्धृष्टः चतं सुररिपुस्तदा।
सम्वर्त्तयित्वा तत्तस्य माहात्म्यं मत्समेव च। युद्धं नो रिपुभिः सार्द्धं भविष्यति नृपोत्तमाः।
साहाय्यं दातुमिच्छामो भवद्भिस्तत्र सर्व्वथा। एवमस्त्विति तानूचुः क्षत्रियाः वीरकुञ्जराः।
पाण्डवेयाकृते वीरान् श्रुतार्थान्नारदादिभिः। क्षत्रियाः सन्निविष्टास्ते युद्धार्थं कुरुनन्दन।
पत्न्यस्तु ब्रह्मदत्तस्य यज्ञवाटं गता अपि। कृष्णोऽपि सेनया सार्द्धमाययौ षट्पुरं विभुः। ८०२५
महादेवस्य वचनमुद्दिश्यानघा नृप। स्थापयित्वा द्वारवत्यामाहुकं पार्थिवं तथा।
स तया सेनया सार्द्धं पौराणां हितकाम्यया। यज्ञवाटस्याविदूरे देवो निविविशे विभुः।
देशे प्रवरकल्याणे वसुदेवप्रचोदितः। दत्तगुल्मप्रतिसरं कृत्वा तं विधिवत् प्रभुः।
प्रद्युम्नमटने श्रीमान् रक्षार्थं विनियुज्य वै।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे द्विचत्वारिंशदधिकशततोऽध्यायः ॥ १४२ ॥

॥ वैशम्पायन उवाच ॥ मुहूर्त्ताभ्युदिते सूर्य्ये जनचक्षुषि निर्म्मले। बलः कृष्णः सात्यकिश्च तार्क्ष्यनाहद्रुमसुरा। ८०३०
बद्धगोधाङ्गुलित्राणा दंशिता युद्धकाङ्क्षिणः। विश्वेदकेश्वरं देवं नमस्कृत्य सुरोत्तमं।
आवर्त्ताया जले स्नात्वा रुद्रेण वरदत्तया। गङ्गायाः कुरुशार्दूल रुद्रवाक्येन पुण्यया।
प्रद्युम्नमग्रे सैन्यस्य वियति स्थाप्य मानदः। रक्षार्थं यज्ञवाटस्य पाण्डवान् विनियुज्य च।
शेषां सेनां गुहाद्वारि भगवान् विनियुज्य च। जयन्तनय सम्मार प्रवरञ्च सताङ्गतिः।
तावापेततुरेवाथ स्वयञ्चापश्यतं तदा। वियत्येव नियुक्तौ तौ प्रद्युम्न इव भारत। ८०३५
ततः कृष्णस्य वचनादाहतो रणदुन्दुभिः। जलता मुरजाश्चैव वाद्यान्यप्यपराणि च।
मकरो रचितो व्यूहः शाम्बेन च गदेन च। सारणश्चोद्धवश्चैव भोजो वैतरणस्तथा।

अनाधृष्टिश्च धर्म्मात्मा विपृथुः पृथुरेव च । कृतवर्म्मा सुदंष्ट्रोऽथ विचक्षुररिमर्द्दनः ।
सनत्कुमारो धर्म्मात्मा चारुदेष्णश्च भारत । अनिरुद्धसहायौ तौ पृष्ठानीकं ररक्षतुः ।
शेषा यादवसेना तु व्यूहमध्ये व्यवस्थिता । रथैरश्वैर्नरैर्नागैराकुला कुलवर्द्धन । ८०६०
षट्पुरादपि निष्क्रान्ता दानवा युद्धदुर्म्मदाः । आरुह्य मेघनादांश्च गर्द्दभानपि हस्तिनः ।
मकराञ्छिशुमारांश्च हयानपि च भारत । महिषानथ खड्गांश्च उष्ट्रानपि च कच्छपान् ।
एतैरेव रथैर्युक्ता विविधायुधपाणयः । किरीटपीठमुकुटैरङ्गदैरपि मण्डिताः ।
नानर्द्दमानैर्विविधैस्तूर्य्यैर्नेमिस्वनाकुलैः । प्रध्मायमानैः शङ्खैश्च महाम्बुदसमस्वनैः ।
तासामसुरसेनानां युध्यतीनां जनेश्वर । निकुम्भो निर्ययावग्रे देवानामिव वासवः । ८०६५
भूमिं द्याञ्च वत्रधिरे दानवास्ते बलोत्कटाः । नदन्तो विविधान्नादान् क्ष्वेडन्तश्च पुनः पुनः ।
राजसेनाऽपि संयत्ता चेदिराजपुरोगमा । असुराणां सहायार्थं निश्चिता जनमेजय ।
दुर्य्योधनभ्रातृशतं चेदिराजानुगाग्रजं । स्थितं रथैर्नरव्याघ्र गन्धर्व्वनगरोपमैः ।
कठिना नादिनो वीर द्रुपदस्यन्दनास्तथा । रुक्मी चैवाकृतिश्चैव तस्थतुर्निश्चितौ रणे ।
तालवृक्षप्रतीकाशे धुन्वानौ धनुषी शुभे । शल्यश्च शकुनिश्चोभौ भगदत्तश्च पार्थिवः । ८०७०
जरासन्धस्त्रिगर्त्तश्च विराटश्च सहोत्तरः । युद्धार्थमुद्यता वीरा निकुम्भाद्या जयैषिणः ।
युयुत्समाना यदुभिर्देवैरिव महासुराः । ततो निकुम्भः समरे शरैराशीविषोपमैः ।
ततर्द्द समरे सेनां भैमानां भीमदर्शनां । सेनापतिरनाधृष्टिर्म्मृधे तत्र यादवः ।
ततर्द्द घोरैर्वाणौघैश्चित्रपुङ्खैः शिलाशितैः । न रथो ऽसुरमुख्यस्य ददृशे न च वाजिनः ।
न ध्वजो न निकुम्भश्च सर्व्वं वाणाभिसंवृतं । स परीत्य ततो वीरो निकुम्भो मायिनाम्वरः । ८०७५
अस्तम्भयदनाधृष्टिं मायया भैमसत्तमं । स्तम्भयित्वानयद्वीरं गुहां षट्पुरसंश्रितां ।
रुद्ध्वा चाभ्यगमद्वीरं मायया बलमाश्रितः । पुनरेव निकुम्भस्तु कृतवर्म्माणमाहवे ।
अनयच्चारुदेष्णञ्च भोजं वैतरणं तथा । सनत्कुमारमाचूर्यञ्च तथैव निशठोल्मुकौ ।
बहूंश्चैवापरान् भोजान्मायाबलसमाश्रितः । न तस्य ददृशे देहो मायाच्छन्नो जनेश्वर ।
नयतो यादवान् घोरां गुहां षट्पुरसंश्रितां । तद्दृष्ट्वा कदनं घोरं भैमानां भैमवर्द्धनः । ८०८०
चुकोप भगवान् कृष्णो बलः सत्यक एव च । सविशेषं तथा कामः शाम्बश्च परवीरहा ।
अनिरुद्धश्च दुर्द्धर्षो भैमाश्च बहवोऽपरे । ततः शार्ङ्गायुधः शार्ङ्गं कृत्वा सज्यं नरेश्वर ।
दानवेषु प्रवृत्तेषु कृष्णेष्विव हुताशनः । तं दृष्ट्वा दानवा देवमभिदुद्रुवुरीश्वरं ।
शलभाः कालपाशार्त्ताः प्रदीप्तमिव पावकं । समुच्छ्रिताः शतघ्नीश्च परिघांश्च सहस्रशः ।
शूलानि चाग्नितुल्यानि प्रदीप्तांश्च परश्वधान् । पर्व्वताग्राणि वृक्षांश्च घोराश्च विपुलाः शिलाः । ८०८५
उत्क्षिप्य च गजामत्तान् रथानपि हयानपि । नारायणाशिरस्तान् सर्व्वान्ददाह प्रहसन्निव ।
वाणार्च्चिषा महातेजा जगद्धितकरो हरिः । शारदं वर्षणं यद्वद्वहेद्वीर गवां पतिः ।

तद्वद्वृषः सेहे बाणवर्षमरिन्दमः । न सेहिरे ऽसुरा बाणान्नारायणधनुश्च्युतान् ।
वर्षं पर्ज्जन्यविहितं बालुकासेतवो यथा । न शेकुः प्रमुखे स्थातुं कृष्णस्यासुरसत्तमाः ।
व्यादितास्यस्य सिंहस्य वृषभा इव भारत । ते बध्यमानाः कृष्णेन दिवमाचक्रमुस्तदा । ८८९०
जीविताशां वहन्तस्तु नारायणभयार्द्दिताः । तानाकाशगतान्वेन्द्रिर्ज्जयन्तः प्रवरस्तदा ।
निजघ्नतुः शरैर्घोरैर्ज्ज्वलनार्च्चिःसमैः प्रभो । निपेतुरसुराणान्तु शिरांसि धरणीतले ।
वृणराजफलानीव मुक्तानि शिखरान्तरीः । निपेतुर्ब्बाहवश्छिन्ना दैत्यानां वसुधातले ।
कालेनापहता वीर पञ्चवक्त्रा इवोरगाः । रौक्मिणेयस्ततः दृष्ट्वा घोरां मायामयीं गुहां ।
अदृश्यश्चिक्रनदीरः यत्तं प्रवेष्टुमुद्यतः । गदेन सह धर्म्मात्मा शारणेन शठेन च । ८८९५
शाम्बेन चापरैश्चापि पूर्व्वं येन प्रवेशिताः । प्रमथ्य तरसा कर्षं यतन्तं रणमूर्द्धनि ।
जग्राह बलवान् कार्ष्णिः प्रस्फुरन्तं ततस्ततः । विनद्य च गुहां वीरो घोरां मायामयीं नृप ।
दुर्य्योधनञ्च राजानं विराटद्रुपदावपि । शकुनिञ्चैव शल्यञ्च नीलञ्चापि नदीसुतं ।
विन्दानुविन्दावावन्त्यौ जरासन्धञ्च भारत । त्रिगर्त्तान्मालवांश्चैव बाह्लीकांश्च महाबलान् ।
धृष्टद्युम्नादयश्चैव पाञ्चालानस्त्रकोविदान् । तथाकृतिमुग्रावीरं मातुलं रुक्मिणेव च । ८९००
शिशुपालञ्च राजानं भगदत्तञ्च भारत । सम्बन्धञ्च गुरुत्वञ्च मानयामि नराधिपाः ।
गुहामिमां घोररूपां ये न प्रवेशयामि वः । बिल्वोदकेश्वरेणाहमाज्ञप्तः शूलपाणिना ।
प्रवेष्टव्या नरेन्द्रास्ते गुहायामिति धीमता । आश्रित्य शाम्बरीं मायां निकुम्भेन महात्मना ।
प्रक्षिप्तान् यादवांश्चैव मोचयिष्यामि सर्व्वथा । इत्युक्तो शिशुपालस्तु राजवेनापतिस्तया ।
शरैस्तदर्द्दतान् भैमान् प्रमुखं सविशेषतः । बिल्वोदकेश्वरं देवं रौक्मिणेयो नमस्य च । ८९०५
अरभन्नृपतिं बद्धुं शिशुपालं महाबलं । ततः पाशसहस्राणि ग्रहाय प्रवरोत्तमः ।
शैलादिरब्रवीद्वीरं रौक्मिणेयं महाबलं । बिल्वोदकेश्वरो देवः प्राह त्वां यदुनन्दन ।
सर्व्वं कुरु तथा राजावुक्तस्त्वं भो यथा मया । कन्यार्थं रत्नलुब्धांस्तु बधानेमान्नराधिपान् ।
पाशैस्त्वमेव मोक्तुञ्च प्रमाणं यदुनन्दन । असुरांस्तु महाबाहो निःशेषान् कर्त्तुमर्हसि ।
एवमेव च वक्तव्यस्त्वया वीर जनार्द्दनः । ततः स भगदत्तञ्च शिशुपालञ्च भूमिपं । ८९१०
आकृतिञ्चैव रुक्मिञ्च शेषांश्चान्यान्नराधिपान् । बबन्ध हरदत्तैस्तैः पाशैरुत्तमवीर्य्यधृक् ।
मायामयीं गुहाञ्चैनाननयत् कुरुवर्द्धन । बद्धा च रौक्मिणेयोऽथ निश्वसन्त इवोरगान् ।
अनिरुद्धञ्चकाराय रचितारं स्वमात्मजं । तेषां निरवशेषेण बबन्ध यदुवर्द्धनः ।
सेनापतीन् क्षत्रियांश्च कोषाध्यक्षांश्च भारत । हस्त्यश्वरथवृन्दांश्च चकार च तथात्मसात् ।
अव्यग्रः स तदा हन्तुमसुरानुद्यतः प्रभो । सन्नद्ध एव चोवाच ब्रह्मदत्तं द्विजोत्तमं । ८९१५
विस्रब्धं वर्त्ततां कर्म्म मा भैः पश्य धनञ्जयं । न देवेभ्यो नासुरेभ्यो नान्येभ्यो द्विजसत्तम ।

भयं हि विद्यते तस्य गोप्तारो यस्य पाण्डवाः । न चाशुरैस्तव सुताः स्पृष्टाः खल्वपि तेजसा ।
दशवाटे निरोच्यैता मायया निहता मया ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे त्रिचत्वारिंशदधिकशततोऽध्यायः ॥ १४३ ॥
॥ वैशम्पायन उवाच ॥ बद्धेषु भूमिपालेषु सानुगेषु विशाम्पते । आविवेशासुरांश्चैव कश्मलं जनमेजय ।
दिशः प्रसस्रुस्ते वीरा बध्यमाना समन्ततः । कृष्णानन्तप्रभृतिभिर्यदुभिर्युद्धदुर्म्मदैः । ८१२०
निकुम्भस्तानथोवाच हृष्टो दानवसत्तमः । भित्त्वा प्रतिज्ञां किं मोहाद्गतार्त्ता याथ विक्लवाः ।
हीनप्रतिज्ञाः कान् लोकान् प्रयास्यथ पलायिताः । अगत्वापचितिं युद्धे ज्ञातीनां हतनिश्चयाः ।
फलं जित्वेह भोक्तव्यं रिपून् समरकर्कशान् । हतेन चापि शूरेण वस्तव्यं त्रिदिवे सुखं ।
पलायित्वा गृहं गत्वा कस्य द्रक्ष्यथ हे सुखं । दारान् वक्ष्यथ किञ्चापि धिग्धिक् किं किं न लज्जथ ।
एवमुक्ता निवृत्तास्ते लज्जमाना नृपासुराः । द्विगुणेन च वेगेन युयुधुर्यदुभिः सह । ८१२५
उत्सवे युद्धशौण्डानां नानाप्रहरणैर्नृप । ये यान्ति यज्ञवाटन्तु तान्निहन्ति धनञ्जयः ।
यमौ भीमश्च राजा च धर्म्मपुत्त्रो युधिष्ठिरः । तां प्रयातान् जघानेन्द्रिः प्रवरश्च द्विजोत्तमः ।
अथासुरासृक्तोयाढ्या केशशैवलशाद्वला । चक्रकूर्म्मरथावर्त्ता गजशैलानुशोभिनी ।
ध्वजकुन्ततरुच्छन्ना स्तनितोत्क्रुष्टशब्दिनी । गोविन्दशैलप्रभवा भीरुचित्तप्रमाथिनी ।
अस्थिबुद्बुदफेनाढ्या अभिमत्स्यतरङ्गिणी । सुस्राव शोणितनदी नदीव जलदागमे । ८१३०
तान्दृष्ट्वैव निकुम्भस्तु वर्द्धमानांश्च शात्रवान् । हतान् सर्व्वान् सहायांश्च वीर्य्याद्वेोत्पपात ह ।
स वारितो जयन्तेन प्रवरेण च भारत । शरैः कुलिशसङ्काशैर्निकुम्भो रणकर्कशः ।
सन्निवृत्य च दष्टौष्ठः परिघेण दुरासदः । प्रवरं ताडयामास स पपात महीतले ।
ऐन्द्रिस्तं पतितं भूमौ बाहुभ्यां परिषस्वजे । विदित्वा चैव सप्राणं हित्वाऽसुरमभिद्रुतः ।
अभिद्रुत्य निकुम्भञ्च निस्त्रिंशेन जघान ह । परिघेणापि दैतेयो जयन्तं समताडयत् । ८१३५
तत्स्तत्राचलद्राचं निकुम्भश्चेन्द्रिणाहवे । स चिन्तयामास तदा बध्यमानो महासुरः ।
कृष्णेन सह योद्धव्यं वैरिणा ज्ञातिघातिना । आमयामि किमात्मानमाहवे शक्रसूनुना ।
एवं स निश्चयं कृत्वा तत्रैवान्तरधीयत । जगाम चैव युद्धार्थं यत्र कृष्णो महाबलः ।
तं दृष्ट्वैरावणस्कन्धमास्थितो बलनाशनः । द्रष्टुमभ्यागतो युद्धं जहृषे सह दैवतैः ।
साधु साध्विति पुत्त्रञ्च परितुष्टस्य सस्वजे । प्रवरञ्चापि धर्म्मात्मा सस्वजे गौरवर्च्चितं । ८१४०
देवदुन्दुभयश्चापि प्रणेदुर्व्योमवाससा । जयमानं रणे दृष्ट्वा जयन्तं रणदुर्ज्जयं ।
ददर्शाथ तिकुम्भस्तु केशवं रणदुर्ज्जयं । अर्ज्जुनेन स्थितं सार्द्धं यज्ञवाटाविदूरतः ।
स नादं सुमहत् कृत्वा पञ्चिराजमताडयत् । परिघेण सुघोरेण बलं सत्यकमेव च ।
नारायणञ्चार्ज्जुनञ्च भीमञ्चाथ युधिष्ठिरं । यमौ च वसुदेवञ्च साम्बं कामञ्च वीर्य्यवान् ।

युयुधे मायया दैत्यः शोघ्रकारी च भारत । न चैनं ददृशुः सर्व्वे सर्व्वशस्त्रविशारदाः ।
यदा तु नैवापश्यत्तं तदा विल्वोदकेश्वरं । दध्यौ देवं हृषीकेशः प्रमथानां गणेश्वरं ।
ततस्ते ददृशुः सर्व्वे प्रभावादतितेजसः । विल्वोदकेश्वरस्याशु निकुम्भं मायिनाम्वरं ।
कैलासशिखराकारं श्वसन्तमिव धिष्ठितं । आक्रयन्तं रणे कृष्णं वैरिणं शातिनाशनं ।
सज्यगाण्डीव एवाथ पार्थस्तस्य रथेषुभिः । परिघश्चैव गात्रेषु विव्याधैनमयासकृत् ।
ते वाणास्तस्य गात्रेषु परिघे च जनाधिप । भग्नाः शिलाशिताः सर्व्वे निपेतुः कुण्ठिताः क्षितौ ।
विफलानस्त्रयुक्तांस्तान्दृष्ट्वा वाणान्धनञ्जयः । पप्रच्छ केशवं वीरः किमेतदिति भारत ।
पर्व्वतानपि भिन्दन्ति मम वज्रोपमाः शराः । किमिदं देवकीपुत्त्र विस्मयोऽत्र महान्मम ।
तमुवाच ततः कृष्णः प्रहसन्निव भारत । महद्भूतं निकुम्भोऽयं कौन्तेय शृणु विस्तरं ।
पुरा गत्वोत्तरकुरूंस्तपस्तेपे महाबलः । शतं वर्षसहस्राणां देवशत्रुर्दुरासदः ।
अथैनं च्छन्दयामास वरेण भगवान् हरः । स वव्रे त्रीणि रूपाणि न बध्यानि सुरासुरैः ।
तमुवाच महादेवो भगवान् वृषभध्वजः । मम वा ब्राह्मणानाम्वा विष्णोर्व्वा ऽप्रियमाचरन् ।
भविष्यसि हरेर्बध्यो न त्वन्यस्य महासुर । ब्रह्मण्योऽहञ्च विष्णुश्च विप्रा नः परमा गतिः ।
स एष सर्व्वशस्त्राणामबध्यः पाण्डुनन्दन । त्रिदेहोऽतिप्रमाथी च वरदत्तश्च दानवः ।
भानुमत्याऽपहरणे देहोऽस्यैको हतो मया । षवध्यं षट्पुरं देहभिदमस्य दुरात्मनः ।
दितिं शुश्रूषति त्वेको देहोऽस्य तपसाऽन्वितः । अन्यस्तु देहो घोरोऽस्य येनावसति षट्पुरं ।
एतत्ते सर्व्वमाख्यातं निकुम्भचरितं मया । त्वरयास्य वधे वीर कथा पश्चाद्भविष्यति ।
तयोः कथयतोरेवं कृष्णयोरसुरस्तदा । गुहां षटपुरसंज्ञां तां विवेश रणदुर्ज्जयः ।
अन्विष्य तस्य भगवान् विवेश मधुसूदनः । तां षटपुरगुहां घोरां दुर्द्दर्शां कुरुनन्दन ।
चन्द्रसूर्य्यप्रभाहीनां ज्वलन्तीं स्वेन तेजसा । सुखदुःखोष्णशीतानि प्रयच्छन्तीं यथेप्सितं ।
तत्र प्रविश्य भगवानपश्यत्तान् जनाधिपान् । युयुधे सह घोरेण निकुम्भेन जनाधिप ।
कृष्णस्यानुप्रविष्टास्तु बलाद्या यादवास्तथा । प्रविष्टाश्च तथा सर्व्वे पाण्डवाश्च महात्मनः ।
सर्वेतास्तु प्रविष्टास्ते कृष्णस्यानुमतेन वै । युयुधे स तु कृष्णेन रौक्मिणेयः प्रचोदितः ।
आनयद्यादवान् सर्व्वान् यानयं बान्धवान् पुरा । ते मुक्ता रौक्मिणेयेन प्राप्ता यत्र जनार्द्दनः ।
प्रहृष्टमनसः सर्व्वे निकुम्भवधकाङ्क्षिणः । राजानो वीर मुञ्चेति पुनः काममयाब्रवीत् ।
मुमोच चाथ तान् वीरान् रौक्मिणेयः प्रतापवान् । अधोमुखमुखाः सर्व्वे बद्धमौना नराधिपाः ।
लज्जयाऽभिप्लुता वीरास्तस्थुर्नष्टश्रियस्तदा । निकुम्भमपि गोविन्दः प्रयतन्तं जयम्प्रति ।
योधयामास भगवान् घोरमात्मरिपुं हरिः । परिघेणाहतः कृष्णो निकुम्भेन भृशं विभो ।
गदया चापि कृष्णेन निकुम्भस्ताडितो भृशं । तावुभौ मोहमापन्नौ सुप्रहारहतौ तदा ।
ततः प्रव्यथितान् दृष्ट्वा पाण्डवांश्चाथ यादवान् । जेपुर्मुनिगणास्तत्र कृष्णस्य हितकाम्यया ।

तुष्टुवुश्च महात्मानं वेदप्रोक्तैः स्तवैस्तथा । ततः प्रत्यागतप्राणो भगवान् केशवस्तदा । ८१७५
दानवश्च पुनर्वीरावुद्यतौ समरं प्रति । वृषभाविव नर्द्दन्तौ गजाविव च भारत ।
शालावृकाविव क्रुद्धौ प्रहरन्तौ रणोत्कटौ । अथ कृष्णं तदोवाच नृप वागशरीरिणी ।
चक्रेण शमयस्वैनं देवब्राह्मणकण्टकं । इतिहोवाच भगवान् देवो विल्वोदकेश्वरः ।
धर्मं यशश्च विपुलं प्राप्नुहि त्वं महाबल । तथेत्युक्त्वा नमस्कृत्वा लोकनाथं सताञ्जतिः ।
सुदर्शनं मुमोचाथ चक्रं दैत्यकुलान्तकं । तन्निकुम्भस्य चिच्छेद शिरः प्रवरकुण्डलं । ८१८०
नारायणभुजोत्सृष्टं सूर्य्यमण्डलवर्च्चसं । तत् पपात शिरस्तस्य भूमौ ज्वलितकुण्डलं ।
मेघमत्तो गिरेः शृङ्गान्मयूर इव भूतले । निकुम्भे निहते तस्मिन्देवो विल्वोदकेश्वरः ।
तुतोष च नरव्याघ्र जगत्त्रासकरे विभो । पपात पुष्पवृष्टिश्च शक्रसृष्टा नभस्तलात् ।
देवदुन्दुभयश्चैव प्रणेदुररिनाशन । ननन्द च जगत् कृत्स्नं मुनयश्च विशेषतः ।
दैत्यकन्याश्च भगवान् यदुभ्यः शतशो ददौ । क्षत्त्रियाणाञ्च भगवान् सान्त्वयित्वा पुनः पुनः । ८१८५
रत्नानि च विचित्राणि वासांसि प्रवराणि च । रथानां वाजियुक्तानां षट्सहस्राणि केशवः ।
अददत् पाण्डवेयेभ्यः प्रीतात्मा गदपूर्व्वजः । तदेव चाथ प्रवरं षट्पुरं पुरवर्द्धनः ।
द्विजाय ब्रह्मदत्ताय ददौ तार्च्यवरध्वजः । सत्रे समाप्ते च तदा शङ्खचक्रगदाधरः ।
विसर्ज्जयित्वा तत्रस्थं पाण्डवांश्च महाबलः । विल्वोदकेश्वरस्याथ समाजमकरोत् प्रभुः ।
मांससूपशताकीर्णं बह्वन्नं व्यञ्जनाकुलं । नियुद्धकुशलान्मल्लान् देवो मल्लप्रियस्तदा । ८१९०
योधयित्वा ददौ भूरि वित्तं वस्त्राणि चात्मवान् । मातापितृभ्यां सहितो यदुभिश्च महाबलः ।
अभिवाद्य ब्रह्मदत्तं ययौ द्वारवतीं पुरीं । स विवेश पुरीं रम्यां हृष्टपुष्टजनाकुलां ।
पुष्पचित्रपथां वीरो वन्द्यमानो नरैः पथि । इमं यः षट्पुरवधं विजयं चक्रपाणिनः ।
शृणुयाद्वा पठेद्वाऽपि स युद्धे जयमाप्नुयात् । अपुत्त्रो लभते पुत्त्रमधनो लभते धनं ।
व्याधितो मुच्यते रोगाद्बद्धश्चाप्यथ बन्धनात् । इदं पुंसवनं प्रोक्तं गर्भाधानञ्च भारत । ८१९५
श्राद्धेषु पठितं सम्यगक्षय्यकरणं स्मृतं ।

इदममरवरस्य भारत प्रथितबलस्य जयं महात्मनः । सततमिह हि यः पठेन्नरः सुगतिमितो व्रजते गतज्वरः ।
मणिकनकविचित्रपाणिपादो निरतिशयार्कगुणोऽरिहादिमध्यः । चतुरुदधिशयश्चतुर्विधात्मा जयतिजगत्पुरुषः सहस्रनामा ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे चतुश्चत्वारिंशदधिकशतोऽध्यायः ॥ १४४ ॥

॥ जनमेजय उवाच ॥ श्रुतोऽयं षट्पुरवधो रम्यो मुनिवरोत्तम । पुरीकमन्धकवधं वैशम्पायन कीर्त्तय ।
भानुमत्याश्च हरणं निकुम्भस्य वधन्तथा । प्रब्रूहि वदतां श्रेष्ठ परं कौतूहलं हि मे । ८२००
॥ वैशम्पायन उवाच ॥ तेषु तेषु च दैत्येषु निहतेषु च विष्णुना । तपसा राधयामास मारीचं कश्यपं दितिः ।
तपसा कालयुक्तेन तथा शुश्रूषया मुनेः । आनुकूल्येन च तथा माधुर्य्येण च भारत ।
परितुष्टः कश्यपस्तु तामुवाच तपोधनां । परितुष्टोऽस्मि ते भद्रे वरं वरय सुव्रते ।

॥ दितिरुवाच ॥ हतपुत्राऽस्मि भगवन् देवैर्द्धर्म्मभृताम्बर । अवध्यं पुत्रमिच्छामि देवैरमितविक्रमं ।
॥ कश्यप उवाच ॥ अवध्यस्ते सुतो देवि दाचायणि भवेद्दिति । देवानां संशयो नात्र कश्चित् कमललोचने ।
देवदेवमृते रुद्रं तस्य न प्रभवाम्यहं । आत्मा ततस्ते पुत्रेण रक्षितव्यो हि सर्व्वथा ।
अन्वालभत तां देवीं कश्यपः सत्यवागथ । अङ्गुल्योदरदेशे तु सा पुत्रं सुषुवे ततः ।
सहस्रबाहुं कौरव्य सहस्रशिरसं तथा । द्विसहस्रेक्षणञ्चैव तावच्चरणमेव च ।
स व्रजत्यन्धवद्यस्मादनन्धोऽपि हि भारत । तमन्धकोऽयं नाम्नेति प्रोचुस्तत्र निवासिनः ।
अवध्योऽस्मीति लोकान् स सर्व्वान् बाधति भारत । हरत्यपि च रत्नानि सर्व्वाण्यात्मबलाश्रयात् ।
वासयत्यात्मवीर्य्येण निरुद्ध्याप्सरसां गणान् । स्ववेश्मन्यूर्ज्जितोऽत्यर्थं सर्व्वलोकभयङ्करः ।
परदारापहरणं पररत्नविलोपनं । चकार सततं मोहादन्धकः पापनिश्चयः ।
त्रैलोक्यविजयं कर्त्तुमुद्यतः स तु भारत । सहायैरसुरैः सार्द्धं बहुभिः सर्व्वधर्षिभिः ।
तं श्रुत्वा भगवान् शक्रः कश्यपं पितरं ब्रवीत् । अन्धकेनेदमारब्धमोदृशं मुनिसत्तम ।
आज्ञापय विभो कार्य्यमस्माकं समनन्तरं । यवीयसः कथं नाम सोढव्यं स्यादनुमे मया ।
दृष्टपुत्रे प्रहर्त्तव्यं कथं नाम मया विभो । दृष्टात्रभवती कुर्य्यान्मन्युं मयि हते सुते ।
देवेन्द्रवचनं श्रुत्वा कश्यपोऽथाब्रवीन्मुनिः । वारयिष्यामि देवेन्द्र सर्व्वथा भद्रमस्तु ते ।
अन्धकं वारयामास दित्या सह तु कश्यपः । त्रैलोक्यविजयादीर कष्टकच्छ्रेण भारत ।
वारितोऽपि स दुष्टात्मा बाधत्येव दिवौकसः । तैस्तैरुपायैर्दुष्टात्मा प्रमथ्य च तथा परान् ।
बभञ्ज कानने वृक्षानुद्यानानि च दुर्म्मतिः । उच्चैःश्रवःसुतानश्वान् बलादप्यानयद्दिवः ।
नागान् दिग्गजसुतान् दिव्यानपि च भारत । बलाद्धरति देवानां पश्यतां बलदर्पितः ।
देवानाप्याययन्त्येव ये यज्ञैस्तपसा तथा । तेषाञ्चकार विध्वंसं दुष्टात्मा देवकण्टकः ।
नेजुर्यज्ञैस्त्रयो वर्णास्तेपुर्नैव तपांस्यपि । अन्धकस्य भयाद्राजन यज्ञविघ्नानि कुर्व्वतः ।
तस्येच्छया वाति वायुरादित्यस्तपत्युत । चन्द्रमाः सहनक्षत्रो दृश्यते नैव वा पुनः ।
न व्रजन्ति विमानानि विहायसि प्रभा प्रभो । अन्धकस्यातिघोरस्य बलदृप्तस्य दुर्म्मतेः ।
निरोङ्कारवषट्कारं जगदीर तदाऽभवत् । अन्धकस्यातिघोरस्य भयात् कुरुकुलोद्वह ।
कुरूनथोत्तरान् पापो द्रावयामास भारत । भद्राश्वान् केतुमालांश्च जम्बुद्वीपांस्तथैव च ।
मानयन्ति च तं देवा दानवाश्च दुरासदाः । भूतानि च तथाऽन्यानि समर्थान्यपि सर्व्वथा ।
ऋषयो बध्यमानास्तु समेता ब्रह्मवादिनः । अचिन्तयन्नन्धकस्य बधं धर्म्मभृताम्बर ।
तेषां बृहस्पतिर्म्मध्ये धीमानिदमथाब्रवीत् । नास्य रुद्रादृते मृत्युर्विद्यते च कथञ्चन ।
तथा वरे दीयमाने कश्यपेनाभिशब्दितं । नाहं रुद्रात् परित्रातुं शक्त इत्येव धीमता ।
तमुपायं चिन्तयामः शर्व्वो येन सनातनः । जानीयात् सर्व्वभूतानि पीड्यमानानि शङ्करः ।
विदितार्थो हि भगवानवश्यं जगतःप्रभुः । अश्रुप्रमार्ज्जनं देवः करिष्यति सतां गतिः ।

अतं हि देवदेवस्य भवस्य जगतो गुरोः। सन्तोऽसङ्गो रचितव्या ब्राह्मणास्तु विशेषतः।
तेवयं नारदं सर्व्वे प्रयामः शरणं द्विजं। उपायं वेत्स्यते तत्र वयस्यो हि भवस्य सः। ८२३५
बृहस्पतिवचः श्रुत्वा सर्व्वे तेऽथ तपोधनाः। त्राणार्थं नारदं प्रोचुस्तांस्तथेति स चोक्तवान्।
ऋषिष्वथ तु यातेषु यत्कार्य्यं नारदो मुनिः। विचार्य्य मनसा विद्वानिति कार्य्यं स दृष्टवान्।
स देवदेवं भगवान् द्रष्टुं मुनिरथाययौ। मन्दारवनमध्यस्थो यत्र नित्यं वृषध्वजः।
स तत्र रजनीमेकामुषित्वा मुनिसत्तमः। मन्दाराणां वने रम्ये दयितः शूलपाणिनः।
आजगाम पुनः स्वर्गं लब्ध्वाऽनुज्ञां वृषध्वजात्। मन्दारपुष्पैः सुकृतां मालामाबध्य भारत। ८२४०
ग्रथितां सविशेषान्तां सर्व्वगन्धोत्तमोत्तमां। सान्तानमाल्यदामञ्च तैरेव कुसुमैः कृतं।
तच्च कण्ठे समासज्य महागन्धं नराधिप। आययावन्धको यत्र दुरात्मा बलदर्पितः।
अन्धकस्त्वथ तं दृष्ट्वा गन्धमाघ्राय चोत्तमं। सन्तानकानां स्रङ्मालां महागन्धां महामुने।
कुत्रेयं पुष्पजातिर्व्वा कमनीया तपोधन। गन्धान् वर्णांश्च तांस्तान् हि भोः पुष्यति मुहुर्मुहुः।
स्वर्गे सन्तानकुसुमान्यतिवर्त्तन्ति सर्व्वथा। कः प्रभुस्तस्य देशस्य शक्यं वानयितुं मुने। ८२४५
आचक्ष्व यद्यनुग्राह्या वयं ते देवतातिथे। तमुवाच मुनिश्रेष्ठः प्रहसन्निव भारत।
ग्रहाय दक्षिणे हस्ते महतस्तपसो निधिः। मन्दरः पर्व्वतश्रेष्ठो वीर कामगमं वनं।
तत्र चैवंविधं पुष्पं भोः सृष्टिः शूलपाणिनः। न तु तत्र वने कश्चिद्स्वच्छन्देन महात्मनः।
प्रवेष्टुं लभते तद्वै रक्षन्ति प्रवरोत्तमाः। नानाप्रहरणा घोरा नानावेशा दुरासदाः।
अवध्याः सर्व्वभूतानां महादेवाभिरक्षिताः। नित्यं प्रक्रीडते तत्र सोमः सप्रवरो हरः। ८२५०
मन्दारद्रुमषण्डेषु सर्व्वात्मा सर्व्वभावनः। तपोविशेषैराराध्य हरं त्रिभुवनेश्वरं।
शक्यं मन्दारपुष्पाणि प्राप्तुं कश्यपवंशज।। स्त्रीरत्नमणिरत्नानि यानि चान्यानि चाप्यथ।
काङ्क्षितानि फलन्ति स्म ते द्रुमा हरवल्लभाः। न तत्र सूर्य्यः सोमोऽथ तपत्यतुलविक्रम।
स्वयम्प्रभं तरुवनं तद्धि दुःखविवर्ज्जितं। तत्र गन्धान् स्रवन्त्यन्ये वस्त्राण्यन्ये महाद्रुमाः।
वासांसि विविधान्यन्ये सुगन्धीनि महाबल। भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यं तथैव च। ८२५५
तरुभ्यः स्रवते तेभ्यो विविधं मनसेप्सितं। पिपासा वा बुभुक्षा वा ग्लानिश्चिन्ताऽपि वाऽनघ।
न मन्दारवने वीर भवतीत्युपधार्य्यतां। न ते वर्णयितुं शक्या गुणा वर्षशतैरपि।
गुणा ये तत्र वर्त्तन्ते स्वर्गाद्बहुगुणोत्तराः। अतीव विजयेल्लोकान् स महेन्द्रान्न संशयः।
एकाहमपि यस्तत्र वसेद्वै दितिजोत्तम। स्वर्गस्यापि हि तत् स्वर्गं सुखानामपि तत् सुखं।
बभूव जगतः सर्व्वमिति मे धीयते मनः। ८२६०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकबधे पञ्चचत्वारिंशदधिकशततोऽध्यायः॥ १४५ ॥
॥ वैशम्पायन उवाच॥ अन्धको नारदवचः श्रुत्वा तत्त्वेन भारत। मन्दरं पर्व्वतं गन्तुं मनो दध्रे महासुरः।
योऽसुरान सुमहातेजाः समानीय महाबलः। जगाम मन्दरं क्रुद्धो महादेवालयं तदा।

तं महाभ्रप्रतिच्छन्नं महौषधिसमाकुलं। नानासिद्धसमाकीर्णं महर्षिगणसेवितं।
चन्दनागुरुवृक्षाढ्यं सरलद्रुमसङ्कुलं। किन्नरोद्गीतरम्यञ्च बहुनागसमाकुलं।
वातोद्धूतैर्वनैः फुल्लैर्नृत्यन्तमिव च क्वचित्। प्रस्रुतैर्धातुभिश्चित्रैर्विलिप्तमिव च क्वचित्। ८२६५
पक्षिस्वनैः सुमधुरैर्नदन्तमिव च क्वचित्। हंसैः शुचिपदैः कीर्णं प्रपतद्भिरितस्ततः।
महाबलैश्च महिषैश्चरद्भिर्हृत्यनाशनैः। चन्द्रांशुविमलैः सिंहैर्भूषितं हिमसन्नयं।
मृगराजशताकीर्णं मृगवृन्दनिषेवितं। स मन्दरगिरिं प्राह रूपिणं बलदर्पितः।
वेत्सि त्वं हि यथाऽवध्यो वरदानादहं पितुः। मम चैव वशे सर्व्वं त्रैलोक्यं सचराचरं।
प्रतियोद्धुं न मां कश्चिदिच्छत्यपि गिरे भयात्। पारिजातवनञ्चास्ति तव सानौ महागिरे। ८२७०
सर्व्वकामप्रदैः पुष्पैर्भूषितं रत्नमुत्तमं। तदाचक्ष्वोपभोक्ष्यामि तद्वनं तव सानुजं।
किं करिष्यसि क्रुद्धस्त्वं मनो हि त्वरते मम। त्रातारं नात्र पश्यामि मया खल्वर्द्दितस्य ते।
इत्युक्तो मन्दरस्तेन तत्रैवान्तरधीयत। ततोऽन्धकोऽतिरुषितो वरदानेन दर्पितः।
मुमोच नादं सुमहदिदं वचनमब्रवीत्। याच्यमानो मया नाम यस्मात्त्वं बहुमन्यसे।
अहं चुर्णीकरोमि त्वां बलं पर्व्वत पश्य मे। एवमुक्त्वा गिरेः शृङ्गमुत्पाट्य बहुयोजनं। ८२७५
निष्पिपेष गिरेस्तस्य शृङ्गेऽयान्यत्र वीर्य्यवान्। सह तैरसुरैः सर्व्वैर्वरदानेन दर्पितः।
तं प्रच्छन्ननदीजालं भज्यमानं महागिरिं। विदित्वा भगवान् रुद्रश्चकारानुग्रहं गिरेः।
सविशेषतरं वीर मत्तद्विपमृगायुतं। नदीजालैर्व्बहुतरैरायुतं चित्रकाननं।
नभश्च्युतैः पुरा यद्वत्तद्वदेव विराजते। अथ देवप्रभावेण शृङ्गाण्युत्पाटितानि तु।
छिन्नानि चासुरानेव घ्नन्ति घोराणि भारत। क्षिप्ता ये प्रपलायन्ते शृङ्गाणि तु महासुराः। ८२८०
शृङ्गैस्तैस्ते स्म बध्यन्ति पर्व्वतस्य जनाधिप। ये स्वस्थास्त्वसुरास्तत्र तिष्ठन्ति गिरिसानुषु।
शृङ्गैस्ते न स्म बध्यन्ते मन्दरस्य महागिरेः। ततोऽन्धकस्तदा दृष्ट्वा सेनां तां मृदितां तथा।
रुषितः सुमहानादं नदित्वेदं तदाऽब्रवीत्। आह्वये तं वनं यस्य युद्धार्थमुपतिष्ठतु।
किं त्वयाऽचल युद्धेन हताः स्म च्छद्मना रणे। एवमुक्ते त्वन्धकेन वृषभेण महेश्वरः।
संप्राप्तः शूलमुद्यम्य देवोऽन्धकजिघांसया। प्रमथानां गणैश्चैव वृतो वै बहुलोचनः। ८२८५
तथा भूतगणैश्चैव धीमान् भूतगणेश्वरः। प्रचकम्पे ततः कृत्स्नं त्रैलोक्यं रुषिते हरे।
सिन्धवश्च प्रतिस्रोतमूहुः प्रज्वलितोदकाः। जग्मुर्दिशोऽग्निदाहांश्च सर्व्वतो हरतेजसा।
युयुधुश्च ग्रहाः सर्व्वे विपरीता जनाधिप। चेलुश्च गिरयस्तत्र काले कुरुकुलोद्वह।
प्रववर्षाथ पर्ज्जन्यः सधूमाङ्गारवृष्टयः। उष्णभाश्चन्द्रमाश्चासीत् सूर्य्यः शीतप्रभस्तथा।
न ब्रह्मापि विदुस्तत्र मुनयो ब्रह्मवादिनः। वडवाः सुषुवुर्गा वै गावोऽश्वानपि चानघ। ८२९०
पेतुर्वृक्षाश्च मेदिन्यामच्छिन्ना भस्मसात् कृताः। वा धन्ते वृषभा गाश्च गावश्चारुरुहुर्वृषान्।
राक्षसा यातुधानाश्च पिशाचाश्चापि सर्व्वशः। विपरीतं जगद्दृष्ट्वा महादेवस्तथागतं।

मुमोच भगवाञ्छूलं प्रदीप्ताग्निसमप्रभं । तत् पपात हरोत्सृष्टमन्धकोरसि दुर्द्धरं ।
भस्मसाच्चाकरोद्रौद्रमन्धकं साधुकण्टकं । ततो देवगणाः सर्व्वे मुनयश्च तपोधनाः ।
शङ्करं तुष्टुवुश्चैव जगच्छत्रौ निवर्हिते । देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह । ८२९५
त्रैलोक्यं निर्वृतञ्चासीन्नरेन्द्र विगतज्वरं । प्रजगुर्द्देवगन्धर्व्वा ननृतुश्चाप्सरोगणाः ।
जेपुश्च ब्राह्मणा वेदानीजुश्च क्रतुभिस्तथा । ग्रहाः प्रकृतिमापेदुरूहुर्नद्यो यथा पुरा ।
न जज्वाल जले वह्निर्दिशः सर्व्वाः प्रसेदिरे । मन्दरः पर्व्वतश्रेष्ठः पुरेव विरराज ह ।
श्रिया परमया जुष्टः सर्व्वतेजःसमुच्छ्रयात् । रेमे सोमश्च भगवान् पारिजातवने हरः ।
सुप्रचारान् सुरान् कृत्वा शक्रादीन् धर्म्मतः प्रभुः । ८३००
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवधे षट्चत्वारिंशदधिकशततोऽध्यायः ॥ १४६ ॥
॥ जनमेजय उवाच ॥ मुनेऽन्धकवधः श्राव्यः श्रुतोऽयं खलु भो मया । शान्तिस्त्रयाणां लोकानां कृता देवेन धीमता ।
निकुम्भस्य हतं देहं द्वितीयं चक्रपाणिना । यदर्थञ्च यथा चैव तद्भवान् वक्तुमर्हति ।
॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजर्षे वक्ष्यं भवतोऽनघ । चरितं लोकनाथस्य हरेरमिततेजसः ।
द्वारवत्यां निवसतो विष्णोरतुलतेजसः । समुद्रयात्रा संप्राप्ता तीर्थे पिण्डारके नृप ।
उग्रसेनो नरपतिर्वसुदेवश्च भारत । निर्ज्जिग्मतुर्नगराच्चैव शेषाः सर्व्वे विनिर्गताः । ८३०५
पृथग्बलः पृथग्धीमान् लोकनाथो जनार्द्दनः । गोष्ठ्यः पृथक् कुमाराणां नृदेवामरतेजसां ।
गणिकानां सहस्राणि निःसृतानि नराधिप । कुमारैः सह वार्ष्णेयैरूपवद्भिः स्वलङ्कृतैः ।
दैत्याधिवासं निर्ज्जित्य यदुभिर्दृढविक्रमैः । वेश्या निवेशिता वीर द्वारवत्यां सहस्रशः ।
सामान्यास्ताः कुमाराणां क्रीडार्थं महात्मनां । इच्छाभोग्या गुणैरेव राजन्या वेश्ययोषितः ।
स्थितिरेषा हि भैमानां कृताः कृष्णेन धीमता । स्त्रीनिमित्तं भवेद्वैरं मा यदूनामिति प्रभो । ८३१०
रेवत्या चैकया सार्द्धं बली रेमे ऽनुकूलया । चक्रवाकानुरागेण यदुश्रेष्ठः प्रतापवान् ।
कादम्बरीपानकलो भूषितो वनमालया । चिक्रीड सागरजले रेवत्या सहितो बलः ।
षोडशस्त्रीसहस्राणि जले जलजलोचनः । रमयामास गोविन्दो वैश्वरूप्येण सर्व्वदृक् ।
अहमिष्टा मया सार्द्धं जले वसति केशवः । इति ता मेनिरे सर्व्वा रात्रौ नारायणस्त्रियः ।
सर्व्वाः सुरतवद्धाङ्ग्यः सर्व्वाः सुरततर्पिताः । मानमूहुश्च ताः सर्व्वा गोविन्दवक्त्रभाजनं । ८३१५
अहमिष्टाऽहमिष्टेति स्त्रिग्धे परिजने तदा । नारायणस्त्रियः सर्व्वा मुदा शश्लाघिरे शुभाः ।
करजद्विजचिह्नानि कुचाधरगतानि ताः । दृष्ट्वा दृष्ट्वा जहृषिरे दर्पणेष्वमलेक्षणाः ।
गोत्रमुद्दिश्य कृष्णस्य जगिरे कृष्णयोषितः । पिबन्त्य इव कृष्णस्य नयनैर्वदनाम्बुजं ।
कृष्णार्पितमनोदृष्ट्यः कान्ता नारायणस्त्रियः । मनोहरतरा राजन् भवन्त्येकनिश्चयाः ।
एकार्पितमनोदृष्ट्यो नेर्ष्यां ताश्चक्रिरेऽङ्गनाः । नारायणेन देवेन तर्प्यमाणमनोरथाः ॥ ८३२०
शिरांसि गर्व्वितान्यूहुः सर्व्वा निरवशेषतः । वाल्लभ्यं केशवमयं वहन्त्यश्चारुदर्शनाः ।

ताभिस्तु सह चिक्रीड सर्व्वाभिर्हरिरात्मवान् । वैश्वरूप्येण विधिना समुद्रे विमले जले ।
उवाह सर्व्वगन्धाढ्यं स्वच्छं वारि महोदधिः । तोयञ्चालवणं वीर वासुदेवस्य शासनात् ।
गुल्फदघ्नं जानुदघ्नमूरुदघ्नमथापि वा । नार्य्यस्ताः स्तनदघ्नं वा जलं समभिकाङ्क्षितं ।
सिषिचुः केशवं पत्न्यो धारा इव महोदधिं । सिषेच तास्य गोविन्दो मेघः फुल्ललता इव । ८३२५
अवलम्ब्यापराः कण्ठे हरिं हरिणलोचनाः । उपगूहस्व मां वीर पतामीत्यब्रुवन् स्त्रियः ।
काश्चित् काष्ठमयैस्तैरः प्लवैः सर्व्वाङ्गशोभनाः । क्रौञ्चवर्हिणनागानामाकारसदृशैः स्त्रियः ।
मकराकृतिभिश्चान्या मीनाभैरपि चापराः, बहुरूपाकृतिधरैः पुप्लुवुश्चापराः स्त्रियः ।
स्तनकुम्भैस्तथा तेरुः कुम्भैरिव तथाऽपराः । सलिले तु समुद्रस्य हर्षयन्त्यो जनार्द्दनं ।
रराम सह रुक्मिण्या जले तस्मिन्मुदा युतः । येनैव कार्य्ययोगेन रमत्यमरसत्तमः । ८३३०
तत्तदेव हितास्चक्रुर्म्मुदा नारायणस्त्रियः । तनुवस्त्रावृतास्तन्व्यो लीलायन्त्यस्तथाऽपराः ।
चिक्रीडुर्वासुदेवस्य जले जलजलोचनाः । यस्या यस्यास्तु यो भावस्तां तां तेनैव केशवः ।
अनुप्रविश्य भावज्ञो निनायात्मवशं वशी । हृषीकेशोऽपि भगवान् हृषीकेशः सनातनः ।
बभूव देशकालेन कान्तावशगतः प्रभुः । कुलशीलसमोऽस्माकं योग्योऽयमिति मेनिरे ।
देशरूपेण वर्त्तन्तमङ्गनास्ता जनार्द्दनं । दत्ता दाक्षिण्ययुक्तन्तु स्मितपूर्व्वाभिभाषिणं । ८३३५
कृष्णं भार्य्यास्चकमिरे भक्त्या च बहुमेनिरे । पृथग्गोष्ठ्यः कुमाराणां प्रकाशं स्त्रीगणैः सह ।
अलञ्चक्रुर्जलं वीराः सागरस्य गुणाकराः । गीतनृत्यविधिज्ञानां तासां स्त्रीणां जनेश्वर ।
तेजसा प्याहृतानान्ते दाक्षिण्यात्तस्थिरे वशे । प्रष्टवन्तश्चानुगीतानि तथा स्वाभिनयान्यपि ।
तुर्य्याण्युत्तमनारीणां मुमुदुर्यदुपुङ्गवाः । पञ्चचूडां ततः कृष्णः कौवेरीश्च वराप्सराः ।
माहेन्द्रीश्चानयामास वैश्वरूप्येण हेतुना । ताः शैवा चाप्रमेयात्मा सान्त्वयित्वा जगत्प्रभुः । ८३४०
उत्थापयित्वा प्रणताः कृताञ्जलिपुटास्तदा । क्रीडायुवत्यो भैमानां प्रविशध्वमशङ्किताः ।
मत्प्रियार्थं वरारोहा रमयध्वञ्च यादवान् । दर्शयध्वं गुणान् सर्व्वान्नृत्यगीतैरहःसु च ।
तथाऽभिनययोगेषु वाद्येषु विविधेषु च । एवं कृते विधास्यामि श्रेयो वो मनसेप्सितं ।
मच्छरीरसमा ह्येते सर्व्वे निरवशेषतः । शिरसाज्ञां तु ताः सर्व्वाः प्रतिगृह्य हरेस्तदा ।
क्रीडायुवत्यो भैमानां ताः प्रविष्टाऽप्सरोवराः । ताभिः प्रविष्टमात्राभिर्द्योतितः स महार्णवः । ८३४५
सौदामिनीभिर्नभसि घनवृन्द इवानघ । ता जले स्थलवत् स्थित्वा जलवाद्यान्यवादयन् ।
चक्रुश्चाभिनयं सम्यक् स्वर्गावास इवाङ्गनाः । गन्धैर्माल्यैश्च ता दिव्यैर्वस्त्रैश्चायतलोचनाः ।
हेलाभिर्हास्यभावैश्च जह्रुर्भैममनांस्यथ । कटाक्षैरिङ्गितैर्हासैः केलिरोषैः प्रसादितैः ।
मनोऽनुकूलैर्भैमानां समाजह्रुर्म्मनांसि ताः । उत्क्षिप्योत्क्षिप्य चाकाशं वातस्कन्धान् बहूंश्च तान् ।
मदिरावशगान् भैमानानयन्ति वराङ्गनाः । कृष्णोऽपि तेषां प्रीत्यर्थं विजह्रे वियति प्रभुः । ८३५०

सर्व्वैः षोडशभिः सार्द्धं स्त्रीसहस्रैर्मुदाऽन्वितः । प्रभावज्ञास्तु ते वीराः कृष्णस्यामिततेजसः ।
न जग्मुर्विस्मयं भैमा गाम्भीर्य्यं परमास्थिताः । केचिद्रैवतकं गत्वा पुनरायान्ति भारत ।
गृहाण्यन्ये वनान्यन्ये काङ्क्षितान्यरिमर्द्दन । अपेयः पेयसलिलः सागरस्त्वाभवत्तदा ।
आज्ञया लोकनाथस्य विष्णोरतुलतेजसः । अधावन् स्थलवच्चापि जले जलजलोचनाः ।
गृह्य हस्ते तया नार्य्यो युक्ता मज्जंस्तथापि ते । भक्ष्यभोज्यानि पेयानि चोष्यं लेह्यन्तथैव च । ८२५५
बहुप्रकारं मनसा ध्याते तेषां भवत्युत । अम्लानमाल्यधारिण्यस्ताः स्त्रियस्तानिन्दितान् ।
रहःसु रमयाञ्चक्रुः स्वर्गे देवरतानुगाः । नौभिर्गृहप्रकाराभिस्त्रिक्रीडुरपराजिताः ।
स्नाताऽनुलिप्ता मुदिताः सायाह्नेऽन्धकवृष्णयः । आयताश्चतुरस्राश्च वृत्ताश्च स्वस्तिकास्तथा ।
प्रासादा नौषु कौरव्य विहिता विश्वकर्म्मणा । कैलासमन्दरच्छन्दा मेरुच्छन्दास्तथैव च ।
तथा नानावयश्छन्दास्तथैहामृगरूपिणः । वैदूर्य्यतोरणैश्चित्रास्त्रित्राभिर्मणिभक्तिभिः । ८२६०
मसारगल्वर्कमयैश्चित्रा भक्तिशतैरपि । प्रक्रीडगरुडच्छन्दाश्चित्राः कनकरीतिभिः ।
क्रौञ्चच्छन्दाः शुकच्छन्दा गजच्छन्दास्तथाऽपरे । कर्णधारैर्गृहीतास्ता नावः कान्तस्वरोज्ज्वलाः ।
सलिलं शोभयामासुः सागरस्य महोर्म्मिमत् । समुच्छ्रितैः सितैः पोतैर्यानपात्रैस्तथैव च ।
नौभिश्च शल्लिकाभिश्च शुशुभे वरुणालयः । पुराण्याकाशगामीनि गन्धर्व्वाणामितस्ततः ।
बभ्रमुः सागरजले भैमयानानि भारत । नन्दनच्छन्दयुक्तेषु यानपात्रेषु भारत । ८२६५
नन्दनप्रतिमं सर्व्वं विहितं विश्वकर्म्मणा । उद्यानानि सभा वृत्ता दीर्घिकाः स्यन्दनानि च ।
निवेशितानि शिल्पानि तादृशान्यत्र सर्व्वथा । स्वर्गच्छन्देषु चान्येषु समासात् स्वर्गसन्निभाः ।
नारायणाज्ञया वीर विहिता विश्वकर्म्मणा । वनेषु रुरुवुर्हृद्यं मधुरञ्चैव पक्षिणः ।
मनोहरतरञ्चैव भैमानामतितेजसां । देवलोकोद्भवाः श्वेता विलेपुः कोकिलास्तथा ।
मधुराणि विचित्राणि यदूनां काङ्क्षितानि च । चन्द्रांशुसमरूपेषु हर्म्म्यपृष्ठेषु बर्हिणः । ८२७०
ननृतुर्म्मधुरारावाः शिखण्डिगणसंवृताः । पताकायानपात्राणां सर्व्वपक्षिगणायुताः ।
भ्रमरैरुपगीताश्च स्रग्दामासक्तवासिभिः । नारायणाज्ञया वृक्षाः पुष्पाणि मुमुचुर्भृशं ।
ऋतवस्त्वानुरूपाणि विहायसि गतास्तदा । ववौ मनोहरो वातो रतिखेदहरः सुखः ।
रजोभिः सर्व्वपुष्पाणां युक्तश्चन्दनशैत्यभृत् । शीतोष्णमिच्छतां तत्र बभूव वसुधापते ।
वासुदेवप्रसादेन भैमानां क्रीडतां तदा । न क्षुत्पिपासे न ग्लानिर्न चिन्ता शोक एव च । ८२७५
आविवेश तदा भैमान् प्रभावाच्चक्रपाणिनः । अप्रशान्तमहातूर्य्या गीतनृत्योपशोभिताः ।
बभूव सागरक्रीडा भैमानामतितेजसां । बहुयोजनविस्तीर्णं समुद्रं सलिलाशयं ।
रुद्ध्वा चिक्रीडुरिन्द्राभा भैमाः कृष्णाभिरक्षिताः । परिच्छदस्यानुरूपं यानपात्रं महात्मनः ।
नारायणस्य देवस्य विहितं विश्वकर्म्मणा । रत्नानि यानि त्रैलोक्ये विशिष्टानि विशाम्पते ।
कृष्णस्य तानि सर्व्वाणि यानपात्रेऽतितेजसः । पृथक् पृथङ्निवासाश्च स्त्रीणां कृष्णस्य भारत । ८२८०

मणिवैदूर्य्यचित्रास्ताः कार्त्तस्वरविभूषिताः। सर्व्वर्त्तुकुसुमाकीर्णाः सर्व्वगन्धाधिवासिताः।
यदुसिंहाः शुभैर्जुष्टाः शकुनैः स्वर्गवासिभिः।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भानुमतीहरणे सप्तचत्वारिंशदधिकशततोऽध्यायः॥ १४७॥

॥ वैशम्पायन उवाच ॥ रेमे बलश्चन्दनपङ्कदिग्धः कादम्बरीपानकलः पृथुश्रीः। रक्तेक्षणो रेवतिमाश्रयित्वा प्रलम्बबाहुः स्खलितः प्रयातः।
नीलाम्बुदाभे वसने वसानश्चन्द्रांशुगौरो मदिराविलाक्षः। रराज रामोऽम्बुदमध्यमेत्य संपूर्णबिम्बो भगवानिवेन्दुः।
वामैककर्णामलकुण्डलश्रीः स्मेरं मनोज्ञाब्जकृतावतंसः। तिर्य्यक्कटाक्षं प्रियया मुमोद रामो मुखं चार्व्वभिवीक्षमाणः।
अथाज्ञया कंसनिकुम्भशत्रोरुदाररूपोऽप्सरसां गणः सः। द्रष्टुं मुदा रेवतिमाजगाम बलालयं स्वर्गसमानमृद्ध्या।
तां रेवतीञ्चाप्यथ वाऽपि रामं सर्व्वा नमस्कृत्य वराङ्गयश्च। वाद्यानुरूपं ननृतुः सुगात्र्यः समन्ततोऽन्या जगिरे च सम्यक्।
चक्रुस्तथैवाभिनयेन लभ्यं यथावदेषां प्रियमर्थयुक्तं। हृद्यानुकूलञ्च बलस्य तस्य तथाज्ञया रेवतराजपुत्र्याः।
चुक्रुर्दुरन्याश्च तथैव तासां तद्देशभाषाकृतिवेशयुक्ताः। सहस्ततालं ललितं सलीलं वराङ्गनाः सर्व्वरताहृताङ्गः।
सङ्कर्षणाधोक्षजनन्दनानि सङ्कीर्त्तयन्त्योऽथ च मङ्गलानि। कंसप्रलम्बादिवधञ्च रम्यं चाणूरघातञ्च तथैव रङ्गे।
यशोदयाथ प्रथितं यशोऽथ दामोदरत्वञ्च जनार्द्दनस्य। वधं तथाऽरिष्टकधेनुकाभ्यां व्रजे च वासं शकुनीवधञ्च।
यथा च भग्नौ यमलार्ज्जुनौ च सृष्टिं वृकाणामपि कालयुक्तां। स कालियो नागपतिर्ह्रदे च कृष्णेन दान्तश्च यथा दुरात्मा।
शङ्खं ह्रदादुद्धरणञ्च वीर पद्मोत्पलानां मधुसूदनेन। गोवर्द्धनोऽर्थे च गवां धृतोऽभूद्यथा च कृष्णेन जनार्द्दनेन।
कुब्जां यथा गन्धकपेषिकाञ्च कुब्जत्वहीनां कृतवांश्च कृष्णः। अवामनं वामनकञ्च चक्रे कृष्णो यथात्मानमजोऽप्यनिन्द्यः।
सौभप्रमाथञ्च हलायुधत्वं वधं परस्याप्यथ देवशत्रोः। गान्धारकन्या वहने नृपाणां रथे तथा योजनमूर्च्छितानां।
तथा सुभद्राहरणे जयञ्च युद्धे च बालाहकजम्बुमाले। रत्नप्रवेकञ्च युधाजितैर्यत् समाहृतं शक्रसमक्षमासीत्।
एतानि चान्यानि च चारुरूपा जगुः स्त्रियः प्रीतिकराणि राजन्। सङ्कर्षणाधोक्षजहर्षणानि चित्राणि चानेककथाश्रयाणि।
कादम्बरीपानमदोत्कटस्तु बलः पृथुश्रीः स चुकूर्द्द रामः। सहस्ततालं मधुरं समञ्च स भार्य्यया रेवतराजपुत्र्या।
तं कूर्द्दमानं मधुसूदनः स दृष्ट्वा महात्मा हर्षान्वितास्ताः। चुकूर्द्द सत्या सहितो महात्मा बलस्य धीमान् हर्षागमार्थं।
समुद्रयात्रार्थमथागतश्च चुकूर्द्द पार्थो नरलोकवीरः। कृष्णेन सार्द्धं मुदितश्चुकूर्द्द सुभद्रया चैव वराङ्गयश्च।
गदश्च धीमानथ सारणश्च प्रद्युम्नशाम्बौ नृप सात्यकश्च। सात्राजितीसूनुरुदारवीर्य्यः स चारुदेष्णश्च सचारुरूपः।
वीरौ कुमारौ निशठोल्मुकौ च रामात्मजौ वीरतमौ चुकूर्द्दतुः। अक्रूरसेनापतिशङ्कवश्च तथाऽपरे भैमकुलप्रधानाः।
तद्यानपात्रं ववृधे तदानीं कृष्णप्रभावेण जनेशपुत्र। आपूर्णमापूर्णमुदारकीर्त्ते चुकूर्द्दयद्भिर्नृपभैममुख्यैः।
तैराप्रसक्तैरतिकूर्द्दमानैर्यदुप्रवीरैरमरप्रकाशैः। हर्षान्वितं वीर जगत्तया ऽभूत्क्षेमुश्च पापानि नरेन्द्रसूनोः।
देवातिथिस्तत्र च नारदोऽथ विप्रः प्रियार्थं मधुकेशिशत्रोः। चुकूर्द्द मध्ये यदुसत्तमानां जटाकलापागलितैकदेशः।
रासप्रणेता धुरि राजपुत्त्र स एव तत्राभवदप्रमेयः। मध्यञ्च गत्वा स चुकूर्द्द भूयो हेलाविकारैः सविडम्बिताङ्गैः।
स सत्यभामामथ केशवञ्च पार्थं सुभद्राञ्च बलञ्च देवं। देवीं तथा रेवतराजपुत्त्रीं सन्दृश्य सन्दृश्य जहास धीमान्।
तां हासयामास स धैर्य्ययुक्तास्तैस्तैरुपायैः परिहासशीलः। चेष्टानुकारैर्हसितानुकारैर्लीलानुकारैरपरैश्च धीमान्।

नृत्यावसाने भगवानुपेन्द्रस्तत्याज धीमानथ तोयमग्र्यान् । उत्तीर्य्य तोयादनुकूलवेषं जग्राह दत्वा मुनिसत्तमाय ।
उपेन्द्रमुत्तीर्णमथाशु दृष्ट्वा भैमा हि ते तत्यजुरेव तोयं । विभक्तगात्राश्च ततः पानभूमिं कृष्णाज्ञया ते ययुरप्रमेयाः ।
यथानुपूर्व्व्या च यथावयश्च यथाभियोगेश्च तदोपदिष्टाः । अन्नानि ते वै बुभुजुः प्रतीताः पपुश्च पेयानि यथानुकूलं ।
मांसानि पक्वानि फलाम्लिकानि चुक्रोत्तरेणाथ च दाडिमेन । निष्टप्तशूल्यान् शकलान् पशूंश्च तत्रोपजह्रुः शुचयोऽथ सूदाः ।
सुस्विन्नशूल्यांश्च महिषांश्च बालान् सुष्टान्सुनिष्टप्तघृतावसिक्तान् । वृक्षाम्लसौवर्चलचुक्रपूर्णान् पौरोगवोक्तानुपजह्रुरेषां । ८४०
पौरोगवोक्त्या विधिना मृगाणां मांसानि सिद्धानि च पीवराणि । नानाप्रकाराण्युपजह्रुरेषां मृष्टानि पक्वानि च चुक्रचूतैः ।
पार्श्वानि चान्ये शकलानि तत्र ददुः पशूनां घृतसाधितानि । सामुद्रचूर्णैर्वरचूर्णितानि चूर्णेन मृष्टेन च मारिचेन ।
समूलकैर्दाडिममातुलुङ्गैः पर्णासहिङ्ग्वार्द्रकभूस्तृणैश्च । तत्रोपदंशैः सुसुखोत्तरैस्ते पानानि हृष्टाः पपुरप्रमेयाः ।
कट्वाकशूल्यैरपि पक्षिभिश्च घृताम्लसौवर्चलतैलसिक्तैः । मैरेयमाध्वीकसुरासवांस्ते पपुः प्रियाभिः परिवार्य्यमाणाः ।
श्वेतेन युक्तानपि शोणितेन भक्ष्यान् सुगन्धान् लवणान्वितांश्च आर्द्रान् किलाटान् घृतपूर्णकांश्च नानाप्रकारानपि खण्डका
द्यान् । ८४५
आपानपानोद्भवभोजमिश्राः शाकैश्च सूपैश्च बहुप्रकारैः । पेयैश्च दध्ना पयसाथ वीराः स्विन्नानि राजन् बुभुजुः प्रहृष्टाः ।
तथा रसालांश्च बहुप्रकाराः पपुः सुगन्धानपि पालवीषु । शृतं पयः शर्करया च युक्तं फलप्रकारांश्च बहूंश्च खादन् ।
तृप्ताः प्रवृत्ताः पुनरेव वीरास्ते भैममुख्या वनितासहायाः । गीतानि रम्याणि जगुः प्रहृष्टाः कान्ताभिनीतानि मनोहराणि ।
आज्ञापयामास ततः समस्तां निशि प्रहृष्टो भगवानुपेन्द्रः । छालिक्यगानं बहुसंविधानं यद्देवगन्धर्व्वमुदाहरन्ति ।
जग्राह वीणामथ नारदस्तु षड्ग्रामरागादिसमाधियुक्तां । हल्लीषकन्तु स्वयमेव कृष्णः सुवंशघोषं नरदेवपार्थः । ८५०
मृदङ्गवाद्यानपरांश्च वाद्यान् वराप्सरास्ता जगृहुः प्रतीताः । आसारितान्ते च ततः प्रतीता रम्भोत्थिता साभिनयार्थतज्ज्ञा ।
तयाभिनीते वरगात्रयष्ट्या तुतोष रामश्च जनार्द्दनश्च । अथोर्व्वशी चारुविशालनेत्रा हेमा च राजन्नथ मिश्रकेशी ।
तिलोत्तमा चाप्यथ मेनका च एतास्तथाऽन्याश्च हरिप्रियार्थं । जगुस्तथैवाभिनयञ्च चक्रुरिष्टैश्च कामैर्मनसोऽनुकूलैः ।
ता वासुदेवोऽप्यनुरक्तचित्तः संनृत्यगीताभिनयैरुदारैः । नरेन्द्रसूनो परितोषितेन ताम्बूलयोगेन वराप्सरोभिः ।
तदागताभिर्नृवरार्हनास्तु कृष्णाज्ञया मानमयास्तथैव । फलानि गन्धोत्तमवन्ति वीराश्छालिक्यगान्धर्व्वमथाहतञ्च । ८५५
कृष्णेच्छया च त्रिदिवान्मुदेव अनुग्रहार्थं भुवि मानुषाणां । स्थितञ्च रम्यं हरितेजसैव प्रयोजयामास सरोऽभिशेषः ।
छालिक्यगान्धर्व्वमुदारबुद्धिस्तेनैव ताम्बूलमथ प्रयुक्तं । प्रयोजितं पञ्चभिरिन्द्रतुल्यैश्छालिक्यमिष्टं सततं नराणां ।
शुभावहं वृद्धिकरं प्रशस्तं मङ्गल्यमेवाथ तथा यशस्यं । पुण्यञ्च पुष्ट्यभ्युदयावहञ्च नारायणस्येष्टमुदारकीर्त्तेः ।
जयावहं धर्म्मधुरावहञ्च दुःस्वप्ननाशं परिकीर्त्त्यमानं । करोति पापञ्च तथा विहन्ति शृण्वन् सुरावासगतो नरेन्द्रः ।
छालिक्यगान्धर्व्वमुदारकीर्त्तिर्येने किलैकं दिवसं सहस्रं । चतुर्युगानां नृप रेवतोऽथ ततः प्रवृत्ता सुकुमारजातिः । ८६०
गान्धर्व्वजातिश्च तथापराणि दीपाद्यथा दीपशतानि राजन् । विवेद कृष्णश्च सनारदश्च प्रद्युम्नमुख्यैर्नृप भैममुख्यैः ।
विज्ञातमेतद्धि परे यथावदुद्देशमात्राणि जनोऽस्तु लोके । जानन्ति छालिक्यगुणोदयानां तोयं नदीनामथ वा समुद्रे ।
ज्ञातुं हि शक्यं हिमवान् गिरिर्व्वा पलायतो वा गुणतोऽथ वापि । शक्यं न तच्छालिक्यमृते तपोभिस्ताने विधानान्यथ
मूर्च्छनासु ।

षड्ग्रामरागेषु च तत्र कार्य्यं तस्यैकदेशावयवेन राजन्। लेशाभिधानं सुकुमारजातिं निष्ठां सुदुःखेन नराः प्रयान्ति।
छालिक्यगान्धर्व्वगुणोदयेषु ये देवगन्धर्व्वमहर्षिसंघाः। निष्ठां प्रयान्तीत्यवगच्छ बुद्ध्या छालिक्यमेवं मधुसूदनेन। ८४६५
भैमोत्तमानां नरदेवदत्तं लोकस्य चानुग्रहकाम्ययैव। गतं प्रतिष्ठाममरोपमेयं बाला युवानश्च तथैव वृद्धाः।
क्रीडन्ति भैमाः प्रवरोत्सवेषु पूर्व्वन्तु बालाः समुदाहरन्ति। वृद्धाश्च पश्चात् प्रतिमानयन्ति स्थानेषु नित्यं प्रतिमानयन्ति
मर्त्येषु मर्त्यान् यदवोऽतिवीराः स्ववंशधर्म्मं समनुस्मरन्तः। पुरातनं धर्म्मविधानतज्ज्ञाः प्रीतिः प्रमाणं न वयः प्रमाणं।
प्रीतिप्रमाणानि हि सौहृदानि प्रीतिं पुरस्कृत्य हि ते दशार्हाः। वृष्ण्यन्धका पुत्त्रसखा बभूवुर्विसर्ज्जिताः केशिविनाशनेन।
स्वर्गं गताश्चाप्सरसां समूहाः कृत्वा प्रणामं मधुकंसशत्रोः। प्रहृष्टरूपस्य प्रहृष्टरूपा विनोदिताः केशिनिषूदनेन। ८४७०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भानुमतीहरणे अष्टचत्वारिंशदधिकशततोऽध्यायः॥ १४८॥

॥ वैशम्पायन उवाच ॥ तेषां क्रीडाप्रसक्तानां यदूनां पुण्यकर्म्मणां। छिद्रमासाद्य दुर्ब्बुद्धिर्द्देवशत्रुर्दुरासदः।
कन्यां भानुमतीं नाम भानोर्दुहितरं नृप। जहारात्मबधाकाङ्क्षी निकुम्भो नाम दानवः।
अन्तर्हितो मोहयित्वा यदूनां प्रमदाजनं। मायावी मायया राजन् पूर्व्ववैरमनुस्मरन्।
भ्रातुर्हि वज्रनाभस्य तस्य कन्या प्रभावती। प्रद्युम्नेन हृता वीर वज्रनाभस्तथा हतः।
भानोरेव तथारण्ये वसत्यवसरेण हि। अस्वाधीने दुराधर्षे छिद्रज्ञो दानवाधमः। ८४७५
कन्यापुरे महानादः सहसा समुपस्थितः। तस्यां ह्रियत्यां कन्यायां रुदत्यां समितिञ्जय।
वसुदेवाहुकौ वीरौ दंशितौ निर्गतावुभौ। आर्त्तनादमुपश्रुत्य भानोः कन्यापुरे तदा।
न दृष्टिगोचरे तौ तु ददृशातेऽपकारिणं। तथैव दंशितो यात्रौ यत्र कृष्णो महाबलः।
अलावमानन्तु महदारुरोह जनार्द्दनः। पार्थेन सहितस्तार्क्ष्यं नागशत्रुमरिन्दमः।
रथे त्वमनुगच्छेति संदिश्य मकरध्वजं। त्वरेति गरुडं वीरः संदिदेश च काश्यपं। ८४८०
वज्रं नगरमायान्तं निकुम्भं रणदुर्ज्जयं। पार्थकृष्णौ महात्मानावासेदतुररिन्दमौ।
प्रद्युम्नश्च महातेजा मायिनां प्रवरो नृप। प्रद्युम्नस्त्वथ तं दृष्ट्वा त्रिधात्मानमथाकरोत्।
तान् सर्व्वान् योधयामास निकुम्भः प्रहसन्निव। बहुकण्टकगुर्व्वीभिर्गदाभिरमरोपमः।
सव्येनालम्ब्य हस्तेन कन्यां भानुमतीं नृप। दक्षिणेनाथ हस्तेन गदया प्रहरत्युत।
कन्यायार्थं न कृष्णौ वा कामो वा नृपसत्तम। निर्द्दयं प्रहरन्ति स्म निकुम्भे च महासुरे। ८४८५
समर्थास्ते महात्मानः शत्रुं हन्तुं दुरासदं। निशश्वसुर्नरपतेर्द्दयाभारावपीडिताः।
श्रेष्ठो धनुष्मतां पार्थः सर्व्वथा कुशलो युधि। नागोष्ठविधिना दैत्यं शरपङ्क्त्या जघान ह।
ते तु वैतस्तिकैर्व्वाणैर्विव्यधुर्द्दानवं युधि। न कन्यां कलया युक्त्या शिक्षया च महीपते।
ततः स कन्यया सार्द्धं तत्रैवान्तरधीयत। आसुरीमाश्रितो मायां न तां वेत्ति हि कश्चन।
तं कृष्णौ रौक्मिणेयश्च पृष्ठतोनुययुस्तदा। हारीतः शकुनो भूत्वा तस्थावथ महासुरः। ८४९०
तं बाणैः पुनरेवाथ वीरो भूयो धनञ्जयः। वैतस्तिकैर्म्मर्म्मभिद्भिः कन्यां रक्षन्नताडयत्।
स इमां पृथिवीं कृत्स्नां सप्तद्वीपां महासुरः। बभ्रामानुगतस्यैव तैर्व्वीरैररिमर्द्दन।

गोकर्णस्योपरिष्टात्तु भ्रंशितः स महासुरः । पपात श्वेलगङ्गायाः पुलिने सह कन्यया ।
न देवा नासुरा वापि लङ्घयन्ति तपोधनाः । गोकर्णं तेजसा युक्तं महादेवस्य भारत ।
एतदन्तरमासाद्य प्रद्युम्नः शीघ्रविक्रमः । कन्यां भानुमतीं भैमो जहार रणदुर्ज्जयः । ८४९५
असुरः सोऽर्द्दितो राजन् कृष्णाभ्यां निशितैः शरैः । त्यक्त्वाथोत्तरगोकर्णं निकुम्भो दक्षिणां दिशं ।
जगाम पृष्ठतो यातौ कृष्णौ तार्क्ष्यगतौ तदा । विवेश षटपुरञ्चैव ज्ञातीनामालयन्तदा ।
तत्र वीरौ गुहद्वारि कृष्णौ रात्रिं तदोषतुः । रौक्मिणेयोऽपि कृष्णेन सन्दिष्टो द्वारकां पुरीं ।
अनयद्भानुतनयां प्रहृष्टेनान्तरात्मना । नयित्वा चाययौ वीरः षटपुरं दानवाकुलं ।
ददर्श च गुहाद्वारि कृष्णौ भीमपराक्रमौ । ऊषतुर्द्वारमाक्रम्य षट्पुरस्य महाबलौ । ८५००
कृष्णौ प्रद्युम्नसहितौ निकुम्भवधकाङ्क्षिणौ । ततोऽनन्तरमेतस्माद्बलादतिबलस्तदा ।
निर्ज्जगाम बली योद्धुं निकुम्भो भीमविक्रमः । तस्य निर्गच्छतस्तस्य विलात् पार्थो विशाम्पते ।
रुरोध सर्व्वतो मार्गं शरैर्गाण्डीवनिःसृतैः । सोऽभिसृत्य गदां घोरामुद्यम्य बद्धकण्टकां ।
शिरस्यताडयत् पार्थं निकुम्भो बलिनाम्बरः । गदयाभिहते पार्थे रक्तं वमति मुह्यति ।
हसित्वा सोऽसुरोदृप्तो रौक्मिणेयमताडयत् । तं प्राङ्मुखमुखं वीरं मायावी मायिनाम्वरं । ८५०५
अदृष्टेनाहतो वीरः शिरस्यथ मुमोह सः । तथा गतौ तु तौ दृष्ट्वा मुह्यमानौ सुताडितौ ।
अभिदुद्राव गोविन्दो निकुम्भं क्रोधमूर्च्छितः । कौमोदकीं समुद्यम्य गदपूर्व्वाग्रजो गदां ।
तावन्योन्यं दुराधर्षौ गर्ज्जन्तावभिपेततुः । ऐरावणगतः शक्रः सर्व्वैर्देवगणैः सह ।
ददर्श तन्महायुद्धं घोरं देवासुरं तदा । दृष्ट्वा देवान् हृषीकेशश्चिन्तयुद्धैररिन्दमः ।
इयेष दानवं हन्तुं देवानां हितकाम्यया । समण्डलानि चित्राणि दर्शयामास केशवः । ८५१०
कौमोदकीं महाबाहुर्लालयन् युद्धकोविदः । तथैवासुरमुख्योऽपि गदां तां बद्धकण्टकां ।
शिक्षया भ्रामयाणोऽथ मण्डलानि चकार ह । वृषभाविव गर्ज्जन्तौ बृंहन्ताविव कुञ्जरौ ।
वाशितान्तरमासाद्य क्रुद्धौ शालावृकाविव । आजघान निकुम्भन्तु गदया गदपूर्व्वजं ।
स्पष्टाष्टघण्टया वीरं नादं मुक्त्वा तु दारुणं । तत्कालमेव कृष्णोऽपि भ्रामयित्वा महागदां ।
निकुम्भमूर्द्धनि तदा पातयामास भारत । अवष्टभ्य मुहूर्त्तन्तु हरिः कौमोदकीं तदा । ८५१५
तस्थौ जगद्गुरुर्द्धीमान्मुमोह पतितः क्षितौ । हाहाभूतं जगत् सर्व्वं तत्कालमभवत्तदा ।
तथागते वासुदेवे नरदेवमहात्मनि । आकाशगङ्गा तोयेन शीतेन सुसुगन्धिना ।
सिषेचामृतमिश्रेण कृष्णं देवेश्वरः स्वयं । नूनमात्मेच्छया कृष्णस्तया चक्रे सुरोत्तमः ।
कोहि शक्तो महात्मानं युद्धे मोहयितुं हरिं । कृष्णः प्रत्यागतप्राणश्चक्रमुद्यम्य भारत ।
प्रतीच्छेति दुरात्मानमुवाच रिपुनाशनः । निकुम्भोऽप्यतिमायावी उत्पपात दुरासदः । ८५२०
शरीरं तत् परित्यज्य न तं वेत्ति च केशवः । मुमूर्षति ततो वार्यमिति मत्वा जनार्द्दनः ।
ररक्ष स्मरमाणोऽथ वीरो वीरव्रतं विभो । अथ प्रद्युम्नकौन्तेयावागतौ लब्धचेतसौ ।

वज्रनाभवधं श्रुत्वं निकुम्भवधकीर्त्तने । तस्मै कौतूहलं श्रोतुं प्रसादाद्भवतो मुने ।
॥ वैशम्पायन उवाच ॥ हन्त ते वर्त्तयिष्यामि वज्रनाभवधं नृप । विजयञ्चैव कामस्य शाम्बस्यैव च भारत ।
मेरोः सानौ नरपते तपस्तेपे महासुरः । वज्रनाभ इतिख्यातो निश्चितः समितिञ्जय ।
तस्य तुष्टो महातेजा ब्रह्मा लोकपितामहः । वरेणच्छन्दयामास तपसा परितोषितः ।
अवध्यतां स देवेभ्यो वव्रे दानवसत्तमः । पुरं वज्रपरञ्चैवं सर्व्वरत्नमयं शुभं ।
अच्छन्देन प्रवेशश्च न वायोरपि भारत । अचिन्तितेन कामानामुपपत्तिं नराधिप ।
शाखानगरमुख्याणां संवाहानां शतानि च । नगरस्याप्रमेयस्य समन्ताज्जनमेजय ।
तथा तदभवत्तस्य वरदानेन भारत । उवास वज्रनगरे वज्रनाभो महासुरः ।
कोटिशो वरलब्धन्तमसुराः परिवार्य्यते । ऊषुर्वज्रपुरे राजन् सम्बाहेषु तथैव च ।
शाखानगरमुख्येषु रम्येषु च नराधिप । हृष्टपुष्टप्रमुदिता नृपदेवस्य शत्रवः ।
वज्रनाभोऽथ दुष्टात्मा वरदानेन दर्पितः । पुरस्थ चात्मनश्चैव जगद्बाधितुमुद्यतः ।
महेन्द्रमब्रवीद्गत्वा देवलोकं विशाम्पते । अहमीशितुमिच्छामि त्रैलोक्यं पाकशासन ।
अथवा मे प्रयच्छस्व युद्धं देवगणेश्वर । सामान्यञ्च जगत्सर्व्वं काश्यपानां महात्मनां ।
स बृहस्पतिना सार्द्धं मन्त्रयित्वा सुरेश्वर । वज्रनाभं सुरश्रेष्ठः प्रोवाच कुरुवंशज ।
सत्रे स दीक्षितः सौम्य कश्यपो नः पिता मुनिः । तस्मिन् वृत्ते यथान्यायं तथा स हि करिष्यति ।
ततः स पितरं गत्वा कश्यपं दानवोऽब्रवीत् । यथोक्तं देवराजेन तमुवाचाथ कश्यपः ।
सत्रे वृत्ते करिष्यामि यथान्याय्यं भविष्यति । त्वन्तु वज्रपुरे पुत्त्र वस गच्छ समाहितः ।
एवमुक्ते वज्रनाभः स्वमेव भवनं गतः । महेन्द्रोऽपि ययौ देवो द्वारकां द्वारमालिनीं ।
गत्वा चान्तर्हितो देवो वासुदेवमथाब्रवीत् । वज्रनाभस्य वृत्तान्तं तमुवाच जनार्द्दनः ।
शौरेरुपस्थितो देव वाजिमेधो महाक्रतुः । तस्मिन् वृत्ते वज्रनाभं पातयिष्यामि वासव ।
तत्रोपायं प्रवेशे तु चिन्तयावः सताकृते । नानिच्छया प्रवेशोऽस्ति तत्र वायोरपि प्रभो ।
ततो गतो देवराजो वासुदेवेन सत्कृतः । वाजिमेधे च संप्राप्ते वसुदेवस्य भारत ।
तस्मिन् यज्ञे वर्त्तमाने प्रवेशार्थं सुरान्तकौ । चिन्तयामासतुर्वीरौ देवराजाच्युतावुभौ ।
तत्र यज्ञे वर्त्तमाने सुनाट्येन नटस्तदा । महर्षीन्तोषयामास भद्रनामेति नामतः ।
तं वरेण मुनिश्रेष्ठाश्छन्दयामासुरात्मवत् । स वव्रे हि नटो भद्रो वरं देवेश्वरोपमः ।
देवेन्द्रकृष्णाच्छन्देन सरस्वत्या प्रचोदितः । प्रणिपत्य मुनिश्रेष्ठानश्वमेधे समागतान् ।
॥ नट उवाच ॥ भोज्यो द्विजानां सर्व्वेषां भवेयं मुनिसत्तमाः । सप्तद्वीपाञ्च पृथिवीं विचरेयमिमामहं ।
प्रसिद्धाकाशगमनः सत्कुर्व्वंश्च विशेषतः । अवध्यः सर्व्वभूतानां स्थावरा ये च जङ्गमाः ।
यस्य यस्य च वेशेन प्रविशेयमहं खलु । मृतस्य जीवतो वापि भावेनोत्पादितस्य च ।
स दृश्यस्तादृशः स्यां वै जरारोगविवर्ज्जितः । तुष्येयुर्मुनयो नित्यमन्ये च मम सर्व्वदा ।

स्थितौ नारायणाभ्यासे निकुम्भवधनिश्चितौ । प्रद्युम्नोऽप्यथ मायावी विदितः कृष्णमब्रवीत ।
निकुम्भस्तात नास्त्यत्र गतः क्वापि सुदुर्म्मतिः । प्रद्युम्नेनैवमुक्ते तु तन्नवाश कलेवरं ।
प्रजहासाथ भगवानर्ज्जुनेन सह प्रभुः । तथायुतसहस्राणि निकुम्भानां जनाधिप । ८५२५
ददृशुस्ते तदा वीर चिता दिवि च सर्व्वतः । सहस्राण्येव कृष्णन्तु तथापार्थमरिन्दम ।
रौक्मिणेयं तथा वीरं तदद्भुतमिवाभवत् । पाण्डवस्य धनुः केचित् केचिदस्य महाशरान् ।
अन्येऽस्य जगृहुर्हस्तावन्ये पादौ महासुराः । एवं गृहाय तं वीरमगमंस्ते विहायसं ।
पार्थानामपि कोयस्तु गृहीतानां तदाभवन् । नान्तं ददर्श कृष्णस्य कार्ष्णिश्च रिपुनाशनौ ।
विच्छिद्य तौ शरैर्वीरौ निकुम्भं पार्थवर्ज्जितौ । एकैकस्तु द्विधाच्छिन्नो द्वैधीभवति भारत । ८५३०
दिव्यज्ञानस्तदा कृष्णो भगवानथ दृष्टवान् । निकुम्भं तत्त्वतश्चापि ददर्श मधुसूदनः ।
स्रष्टारं सर्व्वमायानां हर्त्तारं फाल्गुनस्य च । स चक्रेण शिरस्तस्य चकर्त्तासुरसूदनः ।
पश्यतां सर्व्वभूतानां भूतभव्यभवो हरिः । स मुक्ता फाल्गुनं राजंश्छिन्ने शिरसि भारत ।
पपातासुरमुख्योऽथ छिन्नमूल इव द्रुमः । अथाकाशगतं पार्थं पतमानं विहायसः ।
कृष्णवाक्येन जग्राह कार्ष्णिर्विंयति मानदः । निकुम्भे पतिते भूमौ समाश्वास्य धनञ्जयं । ८५३५
जगाम द्वारकां वीरः पार्थकामसमन्वितः । समियाय दशार्होऽथ द्वारकां मुदितो विभुः ।
नारदञ्च महात्मानं ववन्दे यदुनन्दनः । नारदोऽथ महातेजा भानुं यादवमब्रवीत् ।
भानो माकार्षीर्म्मन्युं त्वं श्रूयतां भैमनन्दन । क्रीडन्त्या रैवतोद्याने दुर्व्वासाः कोपितोऽनया ।
स शशाप ततो रोषान्मुनिर्दुहितरं तव । अतिदुर्ललितैः कन्या शत्रुहस्तं गमिष्यति ।
सुतार्थे ते मया सार्द्धं मुनिभिः स प्रसादितः । बालां द्रुतवतीं कन्यामनागसमिमां मुने । ८५४०
शप्तवानसि धर्म्मज्ञ कथं धर्म्मभृताम्वर । अनन्तरं विधत्स्वाच वयं विज्ञापयामहे ।
अस्माभिरेवमुक्तस्तु दुर्व्वासा भैमनन्दन । उवाचाधोमुखो भूत्वा मुहूर्त्तं कृपयान्वितः ।
यदवोचमहं वाक्यं तत्तथा न तदन्यथा । रिपुहस्तमवश्यं हि गमिष्यति न संशयः ।
अदूषिता तु धर्म्मेण भर्त्तारमुपलप्स्यते । बहुपुत्रा बहुधना सुभगा च भविष्यति ।
सुगन्धिगन्धा च सदा कुमारी च पुनः पुनः । न च शोकमिमं घोरं तन्वङ्गी धारयिष्यति । ८५४५
एवं भानुमती वीर सहदेवाय दीयतां । श्रद्धानः स शूरश्च धर्म्मशीलश्च पाण्डवः ।
ततो भानुमतीं भानुर्द्ददौ माद्रीसुताय वै । सहदेवाय धर्म्मात्मा नारदस्य वचः स्मरन् ।
आनीतः सहदेवश्च प्रेषिते चक्रपाणिना । विवाहे च तदा वृत्ते सभार्य्यः स्वपुरं गतः ।
इमं कृष्णस्य विजयं यः पठेच्छृणुयादथ । विजयं सर्व्वकृत्येषु श्रद्दधानो लभेन्नरः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि भानुमतीहरणे ऊनपञ्चाशदधिकशततोऽध्यायः ॥ १४९ ॥
॥ जनमेजय उवाच ॥ भानुमत्यापहरणं विजयं केशवस्य च । कालिकानयनञ्चैव देवलोकान्महामुने । ८५५०
क्रीडाश्च सागरे दिव्यां वृष्णीनामतितेजसां । अश्रौषं परमाश्चर्य्यं मुने धर्म्मभृताम्वर ।

वज्रनाभवधं श्रुत्वा निकुम्भवधकीर्त्तने । तस्य कौतूहलं श्रोतुं प्रसादाद्भवतो मुने ।
॥ वैशम्पायन उवाच ॥ हन्त ते वर्त्तयिष्यामि वज्रनाभवधं नृप । विजयञ्चैव कामस्य शाम्बस्यैव च भारत ।
मेरोः सानौ नरपते तपस्तेपे महासुरः । वज्रनाभ इतिख्यातो निश्चितः समितिञ्जय ।
तस्य तुष्टो महातेजा ब्रह्मा लोकपितामहः । वरेणच्छन्दयामास तपसा परितोषितः । ८५५५
अवध्यतां स देवेभ्यो वव्रे दानवसत्तमः । पुरं वज्रपुरञ्चैव सर्व्वरत्नमयं शुभं ।
अच्छन्देन प्रवेशश्च न वायोरपि भारत । अचिन्तितेन कामानामुपपत्तिं नराधिप ।
शाखानगरमुख्यानां संवाहानां शतानि च । नगरस्याप्रमेयस्य समन्ताज्जनमेजय ।
तथा तदभवत्तस्य वरदानेन भारत । उवास वज्रनगरे वज्रनाभो महासुरः ।
कोटिशो वरलब्धन्तमसुराः परिवार्य्यते । ऊषुर्वज्रपुरे राजन् संवाहेषु तथैव च । ८५६०
शाखानगरमुख्येषु रम्येषु च नराधिप । हृष्टपुष्टप्रमुदिता नृपदेवस्य शत्रवः ।
वज्रनाभोऽथ दुष्टात्मा वरदानेन दर्पितः । पुरस्थ श्चात्मनश्चैव जगद्बाधितुमुद्यतः ।
महेन्द्रमब्रवीद्गत्वा देवलोकं विशाम्पते । अहमीशितुमिच्छामि त्रैलोक्यं पाकशासन ।
अथवा मे प्रयच्छस्व युद्धं देवगणेश्वर । सामान्यञ्च जगत्सर्व्वं काश्यपानां महात्मनां ।
स बृहस्पतिना सार्द्धं मन्त्रयित्वा सुरेश्वर । वज्रनाभं सुरश्रेष्ठः प्रोवाच कुरुवंशज । ८५६५
सत्रे स दीक्षितः सौम्य काश्यपो नः पिता मुनिः । तस्मिन् वृत्ते यथान्यायं तथा स हि करिष्यति ।
ततः स पितरं गत्वा कश्यपं दानवोऽब्रवीत् । यथोक्तं देवराजेन तमुवाचाथ कश्यपः ।
सत्रे वृत्ते करिष्यामि यथान्याय्यं भविष्यति । त्वन्तु वज्रपुरे पुत्त्र वस गच्छ समाहितः ।
एवमुक्ते वज्रनाभः स्वमेव भवनं गतः । महेन्द्रोऽपि ययौ देवो द्वारकां द्वारमालिनीं ।
गत्वा चान्तर्हितो देवो वासुदेवमथाब्रवीत् । वज्रनाभस्य वृत्तान्तं तमुवाच जनार्द्दनः । ८५७०
शौरेरुपस्थितो देव वाजिमेधो महाक्रतुः । तस्मिन् वृत्ते वज्रनाभं पातयिष्यामि वासव ।
तत्रोपायं प्रवेशे तु चिन्तयावः शतक्रतो । नानिच्छया प्रवेशोऽस्ति तत्र वायोरपि प्रभो ।
ततो गतो देवराजो वासुदेवेन सत्कृतः । वाजिमेधे च संप्राप्ते वसुदेवस्य भारत ।
तस्मिन् यज्ञे वर्त्तमाने प्रवेशार्थं सुरान्तकौ । चिन्तयामासतुर्वीरौ देवराजाच्युतावुभौ ।
तत्र यज्ञे वर्त्तमाने सुनाट्येन नटस्तदा । महर्षींस्तोषयामास भद्रनामेति नामतः । ८५७५
तं वरेण मुनिश्रेष्ठाश्छन्दयामासुरात्मवत् । स वव्रे हि नटो भद्रो वरं देवेश्वरोपमः ।
देवेन्द्रकृष्णच्छन्देन सरस्वत्या प्रचोदितः । प्रणिपत्य मुनिश्रेष्ठानश्वमेधे समागतान् ।
॥ नट उवाच ॥ भोज्यो द्विजानां सर्व्वेषां भवेयं मुनिसत्तमाः । सप्तद्वीपाञ्च पृथिवीं विचरेयमिमामहं ।
प्रसिद्धाकाशगमनः सत्कुर्व्वंश्च विशेषतः । अवध्यः सर्व्वभूतानां स्थावरा ये च जङ्गमाः ।
यस्य यस्य च वेशेन प्रविशेयमहं खलु । मृतस्य जीवतो वापि भावेनोत्पादितस्य च । ८५८०
स दृश्यस्तादृशः स्यां वै जरारोगविवर्ज्जितः । तुष्येयुर्मुनयो नित्यमन्ये च मम सर्व्वदा ।

एवमस्त्विति स प्रोक्तो ब्राह्मणैर्नृपते नटः । सप्तद्वीपां वसुमतीं पर्य्यटत्यमरोपमः ।
पुराणि दानवेन्द्राणामुत्तरांश्च कुरूंस्तथा । भद्राश्वान् केतुमालांश्च कालाम्रद्वीपमेव च ।
पर्व्वणीषु तु सर्व्वासु द्वारकां यदुमण्डितां । आयाति वरदत्तः स लोकवीर महानटः ।
ततो हंसान् धार्त्तराष्ट्रान् देवलोकनिवासिनः । उवाच भगवाञ्छक्रः सान्त्वयित्वा सुरेश्वरः । ८५८८
भवन्तो भ्रातरो ऽस्माकं काश्यपा देवपक्षिणः । विमानवाहा देवानां सुकृतीनां तथैव च ।
देवानामस्ति कर्त्तव्यं कार्य्यं प्रचुरबाधान्वितं । तत् कर्त्तव्यं न मन्त्रश्च भेत्तव्यो वः कथञ्चन ।
न कुर्व्वतां देवताज्ञामुग्रो दण्डः पतेदपि । सर्व्वत्राप्रतिषिद्धं वो गमनं हंससत्तमाः ।
गत्वा प्रवेशमन्येषां वज्रनाभपुरोत्तमं । इतोऽन्तःपुरवापीषु चरमुख्यचितं हि वः ।
तस्यास्ति कन्यारत्नं हि त्रैलोक्यातिशयं शुभं । नाम्ना प्रभावती नाम चन्द्राभेव प्रभावती । ८५९०
वरदानेन सा लब्धा मात्रा किल वरानना । हैमवत्या महादेव्याः सकाशादिति नः श्रुतं ।
स्वयम्वरा च सा कन्या बन्धुभिः स्थापिता सती । आत्मेच्छया पतिं हंसा वरयिष्यति शोभना ।
तद्भवद्भिर्गुणा वाच्या प्रद्युम्नस्य महात्मनः । सद्भूताः कुलरूपस्य शीलस्य वयसस्तथा ।
यदा सा रक्तभावा तु वज्रनाभसुता सती । तस्याः सकाशात् सन्देशो नयितव्यः समाधिना ।
प्रद्युम्नस्य पुनस्तस्मादानयध्वं तथैव च । स्वबुद्ध्या प्राप्तकालञ्च संविधेयं हितं मम । ८५९५
नेत्रवक्त्रप्रसादश्च कर्त्तव्यस्तत्र सर्व्वथा । तथा तथा गुणा वाच्याः प्रद्युम्नस्य महात्मनः ।
यथा यथा प्रभावत्या मनस्तत्र भवेत् स्थिरं । वृत्तान्तश्चानुदिवसं प्रदेयो मम सर्व्वथा ।
द्वारवत्यान्तु कृष्णस्य भ्रातुर्म्मम यवीयसः । तावद्यत्नश्च कर्त्तव्यः प्रद्युम्नो यावदात्मवित् ।
पर्य्यावर्त्तद्दरारोहां वज्रनाभसुतां विभुः । अवध्यास्ते तु देवानां ब्रह्मणो वरदर्पिताः ।
दैवपुत्रैर्हि हन्तव्याः प्रद्युम्नप्रमुखैर्युधि । नटो दत्तवरस्तस्य वेशमास्थाय यादवाः । ८६००
प्रद्युम्नाद्या गमिष्यन्ति वज्रनाभविनाशनाः । एतच्च सर्व्वं कर्त्तव्यमन्यच्च स्वयमेव हि ।
प्राप्तकालं विधातव्यमस्माकं प्रियकाम्यया । प्रवेशस्तत्र देवानां नास्ति हंसाः कथञ्चन ।
वज्रनाभेप्सिते तत्र प्रवेशः खलु सर्व्वथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि प्रद्युम्नोत्तरे पञ्चाशदधिकशततोऽध्यायः ॥ १५० ॥

॥ वैशम्पायन उवाच ॥ ते वासववचः श्रुत्वा हंसा वज्रपुरं ययुः । पूर्व्वोचितं हि गमनं तेषां तत्र नराधिप ।
ते दीर्घिकासु रम्यासु निपेतुर्वीर पक्षिणः । पद्मोत्पलैराचितासु काञ्चनैः स्पर्शनक्षमैः । ८६०५
ते वै नदन्तो मधुरं संस्कृतापूर्व्वभाषिणः । पूर्व्वमप्यागतास्ते तु विस्मयं जनयन्ति हि ।
अन्तःपुरोपभोग्यासु चेरुर्वापीषु ते नृप । दृष्टास्ते वज्रनाभस्य त्रिपिष्टपनिवासिनः ।
आलपन्तः सुमधुरं धार्त्तराष्ट्रा जनेश्वर । स तानुवाच दैतेयो धार्त्तराष्ट्रानिदं वचः ।
त्रिपिष्टपे नित्यरता भवन्तश्चारुभाषिणः । यदैवेहोत्सवो ऽस्माकं भवद्भिरवगम्यते ।
आगन्तव्यं जानपादाः स्वमिदं भवतां गृहं । विस्रब्धैश्च प्रवेष्टव्यं त्रिपिष्टपनिवासिभिः । ८६१०

ते तथोक्ताः शकुनयो वज्रनाभेन भारत । तथेत्युक्त्वा हि विविशुर्द्दानवेन्द्रनिवेशनं ।
चक्रुः परिचयं ते च देवकार्य्यव्यपेक्षया । मानुषालापिनस्ते तु कथाश्चक्रुः पृथग्विधां ।
वंशे बद्धाः काश्यपानां सुकृतीनां सुभागिनां । स्त्रियो रेमुर्विशेषेण शृण्वन्त्यः सकृताः कथाः ।
ततो विचरतीं हंसा ददृशुश्चारुहासिनीं । प्रभावतीं वरारोहां वज्रनाभसुतां तदा ।
हंसाः परिचितां चक्रुस्तां ततश्चारुहासिनीं । सखीं शुचिमुखी चक्रे हंसीं राजसुतां तदा । ८९१५
सा तां कदाचित् पप्रच्छ वज्रनाभसुतां सखीं । विस्रम्भितां पृथक्कृत्यैराख्यानकशतैर्वरां ।
त्रैलोक्यसुन्दरीं वेद्मि त्वामहं हि प्रभावति । रूपशीलगुणैर्द्देवि किञ्चित्त्वां वक्तुमुत्सहे ।
अतिक्रामति ते भीरु यौवनं चारुहासिनि । यदतीतं पुनर्नैति गतं स्रोत इवाम्भसः ।
कामोपभोगतुल्या हि रतिर्द्देवि न विद्यते । स्त्रीणां जगत्त्रि कल्याणि सत्यमेतद्ब्रवीमि ते ।
स्वयम्बरे तु न्यस्ता त्वं पित्रा सर्व्वाङ्गशोभने । न च कांश्चिद्वरयसे देवासुरकुलोद्भवान् । ८९२०
व्रीडिता यान्ति सुश्रोणि प्रत्याख्यातास्त्वया शुभे । रूपशौर्य्यगुणैर्युक्ताः सदृशास्तत्कुलस्य हि ।
आगतान्नेच्छसे देवि सदृशान् कुलरूपयोः । द्रक्ष्यति किमर्थं त्वां प्रद्युम्नो रुक्मिणीसुतः ।
त्रैलोक्ये यस्य रूपेण सदृशोऽस्य कुलेन वा । गुणैर्वा चारुसर्व्वाङ्गि शौर्य्येणाप्यस्ति वा शुभे ।
देवेषु देवः सुश्रोणि दानवेषु च दानवः । मानुषेष्वपि धर्म्मात्मा मानुषः स महाबलः ।
यं सदा देवि दृष्ट्वा हि स्रवन्ति जघनानि हि । आपीनानीव धेनूनां स्रोतांसि सरितामिव । ८९२५
न पूर्णचन्द्रेण मुखं नयने वा कुशेशयैः । उपहासोपमां तु हि मृगेन्द्रेणाथ वा गतिं ।
जगतः सारमुद्धृत्य पुत्त्रः स विहितः शुभे । श्रीवानङ्गं वरे साङ्गं विष्णुना प्रभविष्णुना ।
हतेन शम्बरो बाल्ये येन पापो निवर्हितः । मायाश्च सर्व्वाः संप्राप्ता न च शीलं विनाशितं ।
यान् यान् गुणान् पृथुश्रोणि मनसा कल्पयिष्यसि । एष्टव्यास्त्रिषु लोकेषु प्रद्युम्ने सर्व्व एव ते ।
रुच्या वह्निप्रतीकाशः क्षमया पृथिवीसमः । तेजसा सूर्य्यसदृशो गाम्भीर्य्येण ह्रदोपमः । ८९३०
प्रभावती शुचिमुखीमितिहोवाच भाविनी ।
॥ प्रभावत्युवाच ॥ विष्णुर्म्मानुषलोकस्थः श्रुतः सुबहुशो मया । पितुः कथयतः सौम्य नारदस्य च धीमतः ।
शत्रुः किल स दैत्यानां वर्ज्जनीयः किलानघे । कुलानि किल दैत्यानां तेन दग्धानि भामिनि ।
प्रदीप्तेन रथाङ्गेन शार्ङ्गेण गदया तथा । शाखानगरदेशेषु वसन्ति किल येऽसुराः ।
इत्येते दानवेन्द्रेण संदिश्यन्ते हितं प्रति । मनोरथो हि सर्व्वासां स्त्रीणामेवं शुचिस्मिते । ८९३५
भवेद्धि मे पतिकुलं श्रेष्ठं पितृकुलादिति । यदि नामाभ्युपायः स्यात्तस्येहागमनं प्रति ।
महाननुग्रहो मे स्यात् कुलं स्यात् पावितञ्च मे । समर्थनां मे पृष्ट्वा त्वं प्रयच्छ शुचिलापिनि ।
प्रद्युम्नः श्लाघया भर्त्ता मम वृष्णिकुलोद्भवः । अत्यन्तवैरी दैत्यानामुद्वेजनकरो हरिः ।
असुराणां स्त्रियो वृद्धाः कथयन्त्यो मया श्रुताः । प्रद्युम्नस्य यथा जन्म पुरस्तादपि मे श्रुतं ।
यथा च तेन निहतो बलवान् कालशम्बरः । हृदि मे वर्त्तते नित्यं प्रद्युम्नः खलु सत्तमे । ८९४०

नटस्याथ ददुर्दैत्याः सत्कारं परया मुदा । सपर्य्यार्थं ददुश्चापि रत्नानि सुबहून्यथ । ८७०
ततः स ननृते तत्र वरदत्तो नटस्तथा । स्वपुरे पुरवासीनां परं हर्षं समादधत् ।
रामायणं महाकाव्यमुद्दिश्य नाटकीकृतं । जन्म विष्णोरमेयस्य राक्षसेन्द्रवधेप्सया ।
लोमपादो दशरथ ऋष्यशृङ्गं महामुनिं । शान्तामानाययामास गणिकाभिः सहानघ ।
रामलक्ष्मणशत्रुघ्ना भरतश्चैव भारत । ऋष्यशृङ्गस्य शान्ता च तथारूपैर्नटैः कृतैः ।
तत्कालजीविनो वृद्धा दानवा विस्मयं गताः। आचचक्षुश्च तेषां वै रूपतुल्यत्वमच्युत । ८७५
संस्काराभिनयौ तेषां प्रस्तावानाञ्च धारणं । दृष्ट्वा सर्व्वे प्रवेशञ्च दानवा विस्मयं गताः ।
ते रत्ना विस्मयाच्चेदुरसुराः परया मुदा । उत्थायोत्थाय नाट्यस्य विशेषेषु पुनः पुनः ।
ददुर्व्वस्त्राणि तुष्टाश्च वैडूर्यं वलयानि च । हारान्मनोहरांश्चैव हेमवैदूर्य्यभूषितान् ।
पृथगर्थेषु दत्तेषु श्लोकैस्ते तुष्टुवुर्नटाः । असुरांश्च मुनींश्चैव गोचैरभिजनैरपि ।
प्रेषितं वज्रनाभस्य शाखानगरवासिभिः । नटस्य दिव्यरूपस्य नरेन्द्रागमनं तदा । ८८०
पुरा श्रुतार्थो दैत्येशः प्रेषयामास भारत । आनीयतां वज्रपुरं नटोऽसाविति हर्षितः ।
दानवेन्द्रवचः श्रुत्वा शाखानगरवासिभिः । नीता वज्रपुरं रम्यं नटवेशेन यादवाः ।
आवासश्च ततो दत्तः सुकृतो विश्वकर्म्मणा । एष्टव्यं यच्च तत् सर्व्वं दत्तं शतगुणोत्तरं ।
अथाकालोत्सवं चक्रे वज्रनाभो महासुरः । कारयामास रम्यञ्च चमूवाटं प्रहृष्टवत् ।
ततस्तान् परिविश्रान्तान् प्रेक्षार्थाय प्रचोदयत् । दत्त्वा रत्नानि भूरीणि वज्रनाभो महासुरः । ८८५
उपविष्टश्च तान्द्रष्टुं सह ज्ञातिभिरात्मवान् । कृत्वे चान्तःपुरं स्थाप्य चचुर्दृश्ये जनाधिप ।
भैमापि बहुनेपथ्या नटवेशधरास्तथा । कार्य्यार्थं भीमकर्म्माणो नृत्यार्थमुपचक्रमुः ।
ततो घनं सशुषिरं मुरजानकभूषितं । तन्त्रीं स्वरगुणैर्विद्धामातोद्यानन्ववादयन् ।
ततस्तु देवगान्धारं छालिक्यं श्रवणामृतं । भैमस्त्रियः प्रजगिरे मनःश्रोत्रसुखावहं ।
आगान्धारे ग्रामरागे गङ्गावतरणं तदा । विद्धमासारितं रम्यं जगिरे स्वरसम्पदा । ८९०
लयतालसमं श्रुत्वा गङ्गावतरणं शुभं । असुरान् रामयामासुरुत्थायोत्थाय भारत ।
नान्दीञ्च वादयामास प्रद्युम्नो गद एव च । शाम्बश्च वीर्य्यसम्पन्नः कार्य्यार्थं नटताङ्गतः ।
नान्द्यन्ते च तदा श्लोकं गङ्गावतरणाश्रितं । रौक्मिणेयस्तदोवाच सम्यक् स्वभिनयान्वितं ।
रम्भाभिसारं कौवेरं नाटकं ननृतुस्ततः । शूरो वारणरूपेण रम्भावेशा मनोवती ।
नलकूवरस्तु प्रद्युम्नः शाम्बस्तस्य विदूषकः । कैलासो रूपितश्चापि मायया यदुनन्दनैः । ८९५
शापश्च दत्तः क्रुद्धेन वारणस्य दुरात्मनः । नलकूवरेणाथ यथा रम्भा वाऽप्यथ सान्त्विता ।
एतत् प्रकरणं वीरा ननृतुर्यदुनन्दनाः । नारदस्य मुनेः कीर्त्तिं सर्व्वशस्य महात्मनः ।
पादोद्धारेण नृत्येन तथैवाभिनयेन च । तुष्टुवुर्दानवा वीरा भैमानाममितौजसां ।
ते ददुर्व्वस्त्रमुख्याणि रत्नान्याभरणानि च । हारांस्तरलविद्धांश्च वैदूर्य्यमणिभूषितान् ।

विमानानि विचित्राणि रथांश्चाकाशगामिनः। गजानाकाशगांश्चैव दिव्यनागकुलोद्भवान्। ८७००
चन्दनानि च दिव्यानि शीतानि रसवन्ति च। गुरूण्यगुरुमुख्यानि गन्धाढ्यानि च भारत।
चिन्तामणीनुदारांश्च चिन्तिते सर्व्वकामदान्। प्रेषास्तु सुबह्वीषु ददतो दानवास्तदा।
धनरत्नैर्विरहिताः कृताः पुरुषसत्तम। स्त्रियो दानवमुख्यानां तथैव च जनेश्वर।
ततो हंसी प्रभावत्याः सखी प्राह प्रभावतीं। गताऽस्मि द्वारकां रम्यां भैमगुप्तामनिन्दिते।
प्रद्युम्नस्य मया दृष्टो विविक्ते चारुलोचनः। भक्तिस्ते कथिता तस्य मया तव शुचिस्मिते। ८७०५
तेन हृष्टेन कालस्ते कृतः कमललोचने। अद्य प्रदोषसमये त्वया सह समागमः।
तदद्य रुचिरश्रोणि तव प्रियसमागमः। न ह्यात्मवति भाषन्ते मिथ्या भैमकुलोद्भवाः।
ततः प्रभावती हृष्टा हंसीं तामिदमब्रवीत्। उषिताऽसि ममावासे त्वमनुमर्हसि सुन्दरि।
त्वयाऽहं सहितावासे द्रष्टुमिच्छामि केशवं। निःसाध्वसा भविष्यामि त्वया सह विहङ्गमे।
हंसी तथेति चोवाच सखीं कमललोचनां। आरुरोह च तद्धर्म्यं प्रभावत्या विहङ्गमा। ८७१०
विश्वकर्म्मकृते तस्मिन् हर्म्यपृष्ठे प्रभावती। संविधानञ्चकाराशु प्रद्युम्नागमनक्षमं।
तस्मिन् कृते संविधाने काममानयितुं ययौ। प्रभावतीमनुज्ञाप्य हंसी वायुसमा गतौ।
सा गत्वाऽभ्यागता हंसी प्रभावतीमथाब्रवीत्। अभ्येति रौक्मिणेयोऽसावाम्बसायतलोचने।
प्रद्युम्नो नीयमानन्तु ददृशे माल्यमात्मवान्। भ्रमरैरावृतं वीरः सुगन्धमरिमर्द्दनः।
निलिल्ये तत्र माल्ये च भूत्वा मधुकरस्तदा। प्रभावत्या नीयमाने विदितार्थः प्रतापवान्। ८७१५
प्रवेशितञ्च तन्माल्यं स्त्रीभिर्म्मधुकरायुतं। उपनीतं प्रभावत्यै स्त्रीभिस्तद्भ्रमरावृतं।
अविदूरे च विन्यस्तं प्रभावत्या जनाधिप। भ्रमरास्ते यथुः सौम्य सन्ध्याकाले ह्युपस्थिते।
स भैमप्रवरो वीरस्तैः सहायैर्विहीनितः। कर्णोत्पले प्रभावत्या निलिल्ये मनकैरिव।
ततः प्रभावती हंसीमुवाच वदताम्वरा। उद्यच्छन्तं पूर्णचन्द्रं समीक्ष्यातिमनोहरं।
सखि दह्यन्ति मेऽङ्गानि मुखञ्च परिशुष्यति। औत्सुक्यं हृदि चातीव कोऽयं व्याधिरनौषधः। ८७२०
दधद्द्विगुणमौत्सुक्यमेषा पूर्णनिशाकरः। नवोदितः शीतरश्मिः संविहारी रतिप्रियः।
न दृष्टपूर्व्वो हि मया श्रुतिमात्रेण काङ्क्षितः। अहो धूमायतेऽङ्गानि स्त्रीस्वभावस्य धिक् खलु।
कल्पयामि यथा बुद्ध्या यदि नाभ्येति मे प्रियः। कुमुद्वतीगतं मार्गं हा गमिष्याम्यकिञ्चना।
मदनाशीविषेणास्मि दष्टा हाहा मनस्विनी। शीतवीर्य्याः प्रकृत्यैव जगतो ह्लादनाः सुखाः।
दहन्ति मम गात्राणि किं नु चन्द्रगभस्तयः। प्रकृत्या शीतलो वायुर्नानापुष्परजोवहः। ८७२५
दावाग्निसदृशो मेऽद्य दन्दहीति शुभां तनुं। तदत् संकल्पयत्येतत् स्थैर्य्यं कार्य्यमिवात्मनः।
नावतिष्ठति निर्व्वीर्य्यं मनःसङ्कल्पधर्षितं। विमनस्काऽस्मि मुह्यामि वेपथुर्मे महान् हृदि।
संभ्रमीति च मे दृष्टिर्हा हा यामि भुवं चयं।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि प्रद्युम्नोत्तरे वज्रनाभीये द्विपञ्चाशदधिकशततोऽध्यायः॥ १५२ ॥

॥ वैशम्पायन उवाच ॥ आविष्टेयं मया बाला सर्व्वथेत्यवगम्य तु । कार्ष्णिर्हंष्टेन मनसा हंसीमिदमुवाच ह ।
दैत्येन्द्रतनयां प्राप्तमवगच्छस्व मामिह । षट्पदैः सह षट्पादो भूत्वा माल्ये निलीय तु । ८०३०
विधेयोऽस्मि प्रभावत्या यथेष्टं मयि वर्त्ततां । इत्युक्त्वा दर्शयामास सुरूपो रूपमात्मनः ।
तद्भूर्य्येष्टं प्रभया द्योतितं तस्य धीमतः । अभिभूता प्रभा चैव राजंश्चन्द्रोद्भवा शुभा ।
प्रभावत्यास्तु तं दृष्ट्वा ववृधे कामसागरः । चन्द्रस्येवोदये प्राप्ते पर्व्वण्यां सरितांपतिः ।
सलज्जाधोमुखी किञ्चित् किञ्चित्तिर्य्यगवेक्षिणी । प्रभावती तदा तस्थौ निश्चलेवामलेक्षणा ।
करेणाधःप्रदेशे तां चारुभूषणभूषिते । स्पृष्ट्वोवाच वरारोहां रोमाञ्चिततनुस्तनुं । ८०३५
मनोरथशतैर्लब्धं किं पूर्णेन्दुसमप्रभं । अधोमुखं मुखं कृत्वा न मां किञ्चित् प्रभाषसे ।
प्रभोपमर्दं माकार्षीर्वदनस्य वरानने । साध्वसं त्यज्यतां भीरु दासः साध्वनुदृश्यतां ।
न कालमिव पश्यामि भीरु भीरुत्वमुत्सृज । याचाम्येषोऽञ्जलिं कृत्वा प्राप्तकालं निबोध मे ।
गान्धर्व्वेण विवाहेन कुरुष्वानुग्रहं मम । देशकालानुरूपेण रूपेणानुत्तमा सती ।
उपस्पृश्य ततो भैमो मणिस्थं जातवेदसं । जुहाव समये वीरः पुष्पैर्मन्त्रानुदीरयन् । ८०४०
जग्राहाथ करं तस्या वराभरणभूषितं । चक्रे प्रदक्षिणञ्चैव तं मणिस्थं हुताशनं ।
प्रजज्वाल स तेजस्वी मानयन्नच्युतात्मजं । भगवान् जगतः साक्षी शुभस्याथाशुभस्य च ।
उद्दिश्य दक्षिणां वीरो विप्राणां यदुनन्दनः । उवाच हंसीं द्वारस्था तिष्ठावां रक्ष पक्षिणि ।
तस्यां प्रणम्य यातायां कामसक्तां चारुलोचनां । गृहीत्वा दक्षिणे हस्ते निनाय शयनोत्तमं ।
ऊरावथोपवेश्यैनां सान्त्वयित्वा पुनः पुनः । चुचुम्ब शनकैर्गण्डे वासयन्मुखमारुतैः । ८०४५
ततोऽस्या आपपौ वक्त्रं पद्मं मधुकरो यथा । आलिलिङ्गे च सुश्रोणीं क्रमेण रतिकोविदः ।
अरामयद्रहस्येनां न चोद्वेजितवांस्तदा । आप कृत्स्नश्च रत्यर्थं रतिकार्य्यविशारदः ।
उवास स तया सार्द्धं रमन् कृष्णसुतः प्रभुः । अरुणोदयकाले च ययौ यत्र नटालयः ।
अकामया प्रभावत्या कथञ्चित् स विसर्ज्जितः । तामेव मनसा कान्तां कान्तरूपां समुद्वहन् ।
त ऊषुर्नटवेशेन कार्य्यार्थं भैमवंशजाः । प्रतीक्षन्तस्तदा वाक्यमिन्द्रकेशवयोस्तदा । ८०५०
उद्योगं वज्रनाभस्य त्रैलोक्यविजयं प्रति । प्रतीक्षन्तो महात्मानो गुह्यसंरक्षणे रताः ।
कश्यपस्य मुनेः सत्रं यावत्तावन्नराधिप । देवासुराणां सर्व्वेषामविरोधो महात्मनां ।
त्रैलोक्यविजयार्थाय जपतां धर्म्मचारिणां । एवं कालप्रतीक्षाणां वसतां तत्र धीमतां ।
संप्राप्तः प्रावृषो रम्यः सर्व्वभूतमनोहरः । अहर्न्निशञ्च वृत्तान्तं प्रयच्छन्ति मनोजवाः ।
शक्रकेशवयोर्हंसाः कुमाराणां महात्मनां । रेमे सह प्रभावत्या प्रद्युम्नश्चानुरूपया । ८०५५
रात्रौ रात्रौ महातेजा धार्त्तराष्ट्राभिरक्षितः । तैर्हि वज्रपुरे हंसैर्व्वसञ्छिर्वासवाज्ञया ।
व्याप्तं नृप नटांस्तांश्च न विदुः कालमोहिताः । दिवाऽपि रौक्मिणेयस्तु प्रभावत्या नृपालये ।
तिष्ठत्यन्तर्हितो वीरो हंससंघाभिरक्षितः । माययाऽस्य प्रतिच्छाया दृश्यते हि नटालये ।

देहार्द्धेन तु कौरव्य सिषेवे स प्रभावतीं । सन्नतिं विनयं शीलं लीलां दाक्ष्यं विलासितां ।
स्पृहयन्त्यसुरा दृष्ट्वा विदत्ताश्च महात्मनां । रूपं विलासं गन्धञ्च मृजां भाषामयार्थितां । ८०६०
तासां यादवनारीणां स्पृहयन्त्यसुरस्त्रियः । वज्रनाभस्य तु भ्राता सुनाभो नाम विश्रुतः ।
दुहितृद्वयञ्च नृपते तस्य रूपगुणान्वितं । एका चन्द्रवती नाम्ना गुणवत्यथ चापरा ।
प्रभावत्यालयं ते तु व्रजतः खलु नित्यदा । ददृशाते तु ते तत्र रतिसक्तां प्रभावतीं ।
परिपप्रच्छतुश्चैव विस्रम्भोपगतां सतीं । सोवाच मम विद्याऽस्ति याऽधीता काङ्क्षितं पतिं ।
रत्यर्थमानयत्याशु सौभाग्यञ्च प्रयच्छति । देवं वा दानवं वापि विवशं सद्य एव हि । ८०६५
साऽहं रमामि कान्तेन देवपुत्त्रेण धीमता । दृश्यतां मत्प्रभावेण प्रद्युम्नः सुप्रियो मम ।
ते दृष्ट्वा विस्मयं याते रूपयौवनसम्पदं । पुनरेवाब्रवीत्ते तु भगिन्यौ चारुहासिनी ।
प्रभावती वरारोहा कालप्राप्तमिदं वचः । देवा धर्म्मरता नित्यं दम्भशीला महासुराः ।
देवास्तपसि रक्ता हि सुखे रक्ता महासुराः । देवाः सत्ये रता नित्यमनृते तु महासुराः ।
धर्म्मस्तपश्च सत्यञ्च यत्र तत्र जयो ध्रुवं । देवपुत्त्रौ वरयतं पती विद्यां ददाम्यहं । ८०७०
उचितौ मत्प्रभावेण सद्य एवोपलप्स्यथः । तां तथेत्यूचतुर्हृष्टे भगिन्यौ चारुलोचनां ।
परिपप्रच्छ भैमञ्च कार्य्यन्तत् प्रति मानिनी । स पितृव्यं गदं वीरं शाम्बञ्चाप्यब्रवीत्तदा ।
रूपान्वितौ सुशीलौ च शूरौ च रणकर्म्मणि ।
॥ प्रभावत्युवाच ॥ परितुष्टेन दत्ता मे विद्या दुर्व्वाससा पुरा । परितुष्टेन सौभाग्यं सदा कन्यात्वमेव च ।
देवदानवयक्षाणां यं ध्यास्यसि स ते पतिः । भवितेति मया चैव वीरोऽयमभिकाङ्क्षितः । ८०७५
गृह्णीतं तदिमां विद्यां सद्यो वां प्रियसङ्गमः । ततो जगृहतुर्हृष्टे तां विद्यां भागिनीमुखात् ।
दध्यतुर्गदशाम्बौ च विद्यामभ्यस्य ते शुभे । तौ प्रद्युम्नेन सहितौ प्रविष्टौ भैमनन्दनौ ।
प्रच्छन्नं मायया वीरौ कार्ष्णिना मायिना नृप । गान्धर्व्वेण विवाहेन तावपरिवलार्द्दनौ ।
पाणिं जगृहतुर्वीरौ मन्त्रपूर्व्वं सतां प्रियौ । चन्द्रवत्या गदः शाम्बो गुणवत्या तु केशविः ।
रेमिरेऽसुरकन्याभिर्वीरास्ते यदुपुङ्गवाः । मार्गमाणास्त्वनुज्ञां ते शक्रकेशवयोस्तदा । ८०८०
इतिश्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभीये प्रद्युम्नोत्तरे त्रिपञ्चाशदधिकशततोऽध्यायः ॥ १५३ ॥
॥ वैशम्पायन उवाच ॥ नभो नभस्येऽथ निरीक्ष्य मासि कामस्तदा तोयदवृन्दकीर्णं । प्रभावतीञ्चारुविशालनेत्रामुवाच पूर्णेन्दु
निकाशवक्त्रः ।
तवाननाभो वरगात्रि चन्द्रो न दृश्यते सुन्दरि चारुविम्बः । त्वत्केशपाशप्रतिमैर्निरुद्धो बलाहकैश्चारुनिरन्तरोरु ।
संदृश्यते सुभ्रु तडिद्घनस्था त्वं हेमचार्व्वाभरणान्वितेव । मुञ्चन्ति धाराश्च घना नदन्तस्त्वद्धारयष्टेः सदृशा वराङ्गि ।
घनप्रदेशेषु बलाकपंक्त्यस्त्वद्दन्तपङ्क्तिप्रतिमा विभान्ति । निमग्नपद्मानि सरःसु सुभ्रु न भान्ति तोयानि रयाकुलानि ।
असौ घना वायुवशोपयाता बलाकमालामलचारुदन्ताः । अन्योन्यमभ्याहनितुं प्रवृत्ता वनेषु नागा इव शुक्ल
दन्ताः । ८०८६

धनुश्चित्रवर्णं वरगात्रि पश्य छतं तवापाङ्गमिवाननस्थं । विभूषयन्तं गगनं घनांश्च प्रहर्षणं कामिजनस्य कान्ते ।
घनाजदन्तः प्रतिनर्द्दमानान्निरीक्ष्य सुश्रोणि शिखीन् प्रहृष्टान् । समाहृतानुच्छ्रितपिच्छभारान् प्रियाभिरामानुपनृत्यमानान् ।
हर्म्येषु चान्ये शशिपाण्डरेषु राजन्ति सुश्रोणि मयूरसंघाः । मुहूर्त्तशोभामतिचारुरूपां दत्त्वा पतन्तो वडभीपुटेषु ।
प्रक्षिप्तपत्रास्तरुमस्तकेषु मुहूर्त्तचूडामणितां विधाय । प्रयान्ति भूमिं नवशाद्वलानामाशङ्कमाना हृतचारुदेशाः ।
प्रवाति धारान्तरनिःसृतस्य सुखोऽनिलस्यन्दनपङ्कशीतः । कदम्बसर्ज्जार्ज्जुनपुष्पभूतं समावहन् गन्धमनङ्गबन्धुं । ८७९०
रतिश्रमखेदविनाशहेतुर्नवोदभारानयने च हेतुः । न मारुतः स्याद्यदि चारुगात्रि न मेघकालो मम वल्लभः स्यात् ।
एवंविधेषु प्रियसङ्गमेषु रतावसाने यदुपैति वायुः । रतिश्रमखेदहरः सुगन्धिस्ततः परं किं सुखमस्ति लोके ।
जलाप्लुतानीक्ष्य महानदीनां सुगात्रि हंसाः पुलिनानि हृष्टाः । गताः श्रमं मानसवासलुब्धाः ससारसाः क्रौञ्चगणानुविद्धाः ।
न भान्ति नद्योऽथ सरांसि चैव हृतत्विषस्त्वायतचारुनेत्रे । गतेषु हंसेष्वथ सारसेषु रथाङ्गतुल्याह्वयनेषु चैव ।
भोगैकदेशेन शुभं शयानं ध्रुवं जगन्नाथमुपेन्द्रमीशं । निद्राऽभ्युपेता वरकालतन्त्रा श्रियं प्रणम्योत्तमचारुरूपां । ८७९५
निद्रायमाणे भगवत्युपेन्द्रे मेघाम्बराक्रान्तनिशाकरोऽद्य । पद्मामलाभः कमलायताक्षि कृष्णस्य वक्त्रानुकृतिं करोति ।
कदम्बनीपार्ज्जुनकेतकानां सखी ध्रुवं कृष्णमुपानयन्ति । पुष्पाणि चान्यान्यृतवः समस्ताः कृष्णात् प्रसादानभिकाङ्क्षमाणाः ।
नागाश्चरन्तो विषदिग्धवक्त्राः स्पृशन्ति पुष्पाण्यथ पादपान् यान् । पेपीयमाना भ्रमरैर्जनानां कौतूहलं ते जनयन्त्यतीव ।
तोयातिभाराम्बुदवृन्दनद्धं नभः पतिष्यन्तमिवाभिवीक्ष्य । निपानगम्भीरमभिप्रविष्टं मनोहरं चारुसुखस्तनोरु ।
बलाकमालाकुलमम्बुदाभा निरीक्ष्य रम्यं घनवृन्दमेतत् । सस्यानि भूमावभिवर्धमाणं जगद्धितार्थं विमलाङ्गयष्टे । ८८००
जलावलम्बाम्बुदवृन्दकर्षी घनैर्घनान् योधयतीव वायुः । प्रवृत्तचक्रो नृपतिर्वनस्थान् गजान् गजैः स्वैरिव वीर्य्यदृप्तान् ।
अभौममम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धि । हर्षावहं चातकबर्हिणानां वराप्सजानां जलदप्रियाणां ।
प्लवङ्गमः षोडशपत्रशायी विरौति गोष्ठः सह कामिनीभिः । ऋचो द्विजातिः प्रियसत्यधर्म्मा यथा स्वशिष्यैः परिवार्य्यमाणः ।
गुणो महांस्तोयदकालजोऽयं प्रवृद्धमेघस्तनभीषिता यत् । परिष्वजन्त्यः परिवर्द्धयन्ति विनाऽपि शय्यासमयं प्रियाणां ।
दोषोऽयमेकः सलिलागमस्य मां प्रत्युदारान् वयवर्षशीले । न दृश्यते यत्तव वक्त्रतुल्यो घनपङ्क्तिग्रस्ततनुः शशाङ्कः । ८८०५
प्रदृश्यते भीरु यदा शशाङ्को घनान्तरस्थो जगतः प्रदीपः । तदाऽनुपश्यन्ति जनाः प्रहृष्टा बन्धुं प्रवासादिव सन्निवृत्तं ।
विलापयाची प्रियहीनितानां संदृश्यते भीरु यदा शशाङ्कः । नेत्रोत्सवः प्रोषितकामुकानां दृष्ट्वैव कान्तं भवतीत्यवैमि ।
नेत्रोत्सवः कान्तसमागतानां दावाग्नितुल्यः प्रियहीनितानां । तेनैव देहेन वराङ्गनानां चन्द्रोऽपि तावत् प्रियविप्रियश्च ।
विनाऽपि चन्द्रेण पुरे पितुस्ते यतः प्रभा चन्द्रगभस्तिगौरी । गुणागुणं चन्द्रमसो न वेद्मि यतस्ततोऽहं प्रसुशंसयिष्ये ।
अवाप यो ब्राह्मणराज्यमीशो दुरापमन्यैः सुकृतैस्तपोभिः । गायन्ति विप्राः पवमानसंज्ञं यं सामगाः पर्व्वणि चाप्युदारं । ८८१०
पिता बुधस्योत्तमवीर्य्यकर्म्मा पुरूरवा यस्य सुतो नृदेवः । प्राणाग्निरीशोऽग्निमजीजनद्यो नष्टं शमीगर्भभवं भवात्मा ।
तथैव पश्चाच्चकमे महात्मा पुरोर्व्वशीमप्सरसां वरिष्ठां । पीतः पुरा योऽस्तमर्व्वदेहो मुनिप्रवीरैर्वरगात्रि घोरैः ।
नृपः कुशाग्रैः पुनरेव यस्य धीमान् कृतोऽग्निर्दिवि पूज्यते च । आयुश्च वंशे नहुषश्च यस्य यो देवराजत्वमवाप वीरः ।

देवातिदेवो भगवान् प्रसूतो वंशे हरिर्यस्य जगत्प्रणेता । भैमप्रवीरः सुरकार्य्यहेतोर्यः सुभ्रु दत्तस्य वृतः सुताभिः ।
बभूव राजा च वसुश्च यस्य वंशे महात्मा शशिवंशकेतुः । यश्चक्रवर्त्तित्वमवाप वीरः स्वैः कर्म्मभिः शक्रसमप्रभावः । ८८१५
यदुश्च राजा शशिवंशमुख्यो योऽवाप मह्याम‍धिराजभावं । भोजाः कुले यस्य नराधिपस्य वीराः प्रसूताः सुरराज तुल्याः ।
न कूटकृद्यस्य नृपोऽस्ति वंशे न नास्तिको नैकृतिकोऽथ वाऽपि । अश्रद्दधानोऽप्यथ वा कदर्य्यः शौर्य्येण वा वारिरुहाक्षिहीनः ।
वंशे वधूस्त्वं कमलायताक्षि श्लाघ्या गुणानामतिपात्रभूता । कुरु प्रणामं शिरसाग्रदन्ति तस्य त्वमीशस्य सतां प्रियस्य ।
नारायणायात्मभवायनाय लोकायनाय त्रिदशायनाय । खगेन्द्रकेतोः पुरुषोत्तमाय कुरु प्रणामं श्वशुराय देवि ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभीये प्रद्युम्नोत्तरे चतुःपञ्चाशदधिकशतोऽध्यायः ॥ १५४ ॥
॥ वैशम्पायन उवाच ॥ सत्रावसाने तु मुनेः कश्यपस्यातितेजसः । जग्मुर्देवासुराः स्वानि स्थानान्यमितविक्रमाः । ८८२०
वज्रनाभोऽपि निर्वृत्ते सत्रे कश्यपमभ्यगात् । त्रैलोक्यविजयाकाङ्क्षी तमुवाचाथ कश्यपः ।
वज्रनाभ निबोधस्व श्रोतव्यं यदि चेन्मम । वस वज्रपुरे पुत्र स्वजनेन समावृतः ।
तपसाऽभ्यधिकः शक्रः शक्तश्चैव स्वभावतः । ब्रह्मण्यश्च कृतज्ञश्च ज्येष्ठः श्रेष्ठतमो गुणैः ।
राजा कृत्स्नस्य जगतः पात्रभूतः सतां गतिः । संप्राप्तो लोकराज्यं स सर्व्वभूतहिते रतः ।
नैव शक्यस्त्वया जेतुं वज्रनाभ विहन्यसे । अहिं पदा व्युत्क्रामन् वै नचिराद्विनशिष्यसि । ८८२५
वज्रनाभस्तु तद्वाक्यं नाभिनन्दति भारत । कालपाशपरीताङ्गो मर्त्तुकाम इवौषधं ।
अभिवाद्य सुदुर्ब्बुद्धिः कश्यपं लोकभावनं । त्रैलोक्यविजयारम्भे मतिश्चक्रे दुरासदः ।
ज्ञातियोधान् समानीय मित्राणि सुबहूनि च । प्रतस्थे स्वर्गमेवाग्रे विजिगीषन् विशाम्पते ।
एतस्मिन्नन्तरे देवौ कृष्णेन्द्रौ च महाबलौ । प्रेषयामासतुर्हंसान् वज्रनाभवधं प्रति ।
समागतास्तु तत्कुला यदुमुख्या महाबलाः । मन्त्रयित्वा महात्मानश्चिन्तामापेदिरे तदा । ८८३०
वज्रनाभोऽद्य हन्तव्यः प्रद्युम्नेनेत्यसंशयं । तयोर्दुहितरो भर्य्या भक्त्या ताः सर्व्वभावनाः ।
सर्व्वाः सगर्भास्ताश्चैव किन्नु कार्य्यमनन्तरं । प्राप्तः प्रसवकालश्च तासां नातिचिरादिव ।
संमन्त्रयित्वैतदर्थं हंसानूचे महाबलः । आख्येयमर्थवत् कृत्स्नं शक्रकेशवयोस्तदा ।
हंसैर्गत्वा तदाख्यातं देवयोस्तद्यथातथं । ताभ्यां हंसास्तु सन्दिष्टा न भेतव्यमिति प्रभो ।
उत्पत्स्यन्ति गुणैः श्लाघ्याः पुत्रा वः कामरूपिणः । गर्भस्थाः सर्व्ववेदांश्च साङ्गान् वेत्स्यन्त्यनिन्दिताः । ८८३५
तथा चानागतं सर्व्वं मन्त्राणि विविधानिच । सद्य एव युवानश्च भविष्यन्ति सुपण्डिताः ।
एवमुक्ता गता हंसाः पुनर्व्वज्रपुरं विभो । शशंसुश्चैव भैमानां शक्रकेशवभाषितं ।
प्रभावती तदा पुत्रं सुषुवे सदृशं पितुः । सद्यो यौवनसंप्राप्तं सर्व्वज्ञत्वञ्च भारत ।
मासमात्रेण सुषुवे देवी चन्द्रवती नृप । चन्द्रप्रभमिति ख्यातं तनयं सदृशं पितुः ।
सद्यस्च यौवनं प्राप्तं सर्व्वज्ञत्वञ्च भारत । गुणवत्यपि पुत्रञ्च गुणवन्तमनिन्दितं । ८८४०
युवानावथ सद्यस्तौ सर्व्वशास्त्रार्थकोविदौ । इन्द्रोपेन्द्रप्रसादेन संवृत्तौ यदुवर्द्धनौ ।

हर्म्यपृष्ठे वर्द्धमाना दृष्टास्ते यदुनन्दनाः । इन्द्रोपेन्द्रेच्छया वीर नान्यथेत्यवधार्य्यतां ।
निर्वेदितास्च संभ्रान्तैर्दैत्यैराकाशरक्षिभिः । वज्रनाभाय वीराय त्रिपिष्टपजयैषिणे ।
विधार्य्य सर्व्वे गृह्यन्तां ममैते गृहधर्षकाः । इत्युवाचासुरपतिर्व्वज्रनाभो दुरासदः ।
ततः सैन्यं समाज्ञप्तमसुरेन्द्रेण धीमता । आवारयामास दिशः सर्व्वाः कुरुकुलोदह । ८८४५
गृह्यन्तामाशु बध्यन्तामिति वाचस्ततस्ततः । उच्चेरुरसुरेन्द्रस्य शासनादरिशासिनः ।
तच्छ्रुत्वा व्यथितास्तेषां मातरः पुत्त्रवत्सलाः । रुरुदुस्ता रुदन्त्योऽथ प्रद्युम्नः सहसाऽब्रवीत् ।
माभैष्ट जीवमानेषु स्थिरेष्वस्मासु सर्व्वथा । किं नो दैत्याः करिष्यन्ति सर्व्वथा भद्रमस्तु वः ।
प्रभावतीमथोवाच प्रद्युम्नो विक्लवां स्थितां । पिता तव गदापाणिः पितृव्यास्च स्थितास्तव ।
भ्रातरस्चैव ते देवि ज्ञातयस्च तथाऽपरे । एते पूज्यास्च मान्यास्च तवार्य्ये खलु सर्व्वथा । ८८५०
भगिन्यो पृच्छ भद्रन्ते कालोऽयं खलु दारुणः । मरणं सहमानानां युध्यतां विजयो ध्रुवः ।
दानवेन्द्रादयो ह्येते यातस्तन्तेऽस्मदर्थैषिणः । किमत्र कार्य्यमस्माभिः सर्व्वैश्चक्रान्तरस्थितैः ।
प्रभावती रुदन्ती तु प्रद्युम्नमिदमब्रवीत् । शिरस्यञ्जलिमाधाय जानुभ्यां पतिता क्षितौ ।
गृहाण शस्त्रमात्मानं रक्ष शत्रुनिवर्हण । जीवन् पुत्त्रांस्च दारांस्च द्रष्टाऽसि यदुनन्दन ।
आर्य्यां नृवर वैदर्भीमनिरुद्धस्च मानद । स्वलैतान्मोचयात्मानं व्यसनादरिमर्द्दन । ८८५५
दुर्व्वाससा वरो दत्तो मुनिना मम धीमता । वैधव्यरहिता ह्यद्या जीवपुत्त्रा भविष्यसि ।
एष मे हृदयास्वासो भविता न तदन्यथा । सूर्य्याग्नितेजसो वाक्यं मुनेरिन्द्रानुजात्मज ।
इत्युक्ताऽथासिमादाय सूपस्पृष्ट्वा मनस्विनी । प्रददौ रौक्मिणेयाय जयस्वेति वरं वरा ।
स तं जग्राह धर्म्मात्मा प्रहृष्टेनान्तरात्मना । प्रणम्य शिरसा दत्तं प्रियया भक्तियुक्तया ।
चन्द्रवत्यपि निस्त्रिंशं गदाय प्रददौ मुदा । तदा गुणवती चैव शाम्बायापि महात्मने । ८८६०
हंसकेतुमथोवाच प्रद्युम्नः प्रणतं प्रभुः । इहैव शाम्बसहितो युध्यस्व सह दानवैः ।
आकाशे दिक्षु सर्व्वासु योत्स्याम्यहमरिन्दम । इत्युक्त्वाऽथ रथं चक्रे मायया मायिनाम्वरः ।
सहस्रशिरसं नागं कृत्वा सारथिमात्मवान् । अनन्तभोगं कौरव्य सर्व्वनागोत्तमोत्तमं ।
स तेन रथमुख्येन हर्षयन् वै प्रभावतीं । चचारासुरसैन्येषु तृणेष्विव हुताशनः ।
शरैराशीविषप्रख्यैरर्द्धचन्द्रानुकारिभिः । भेदनैर्गोधनैस्चैव ततर्द्द दितिसम्भवान । ८८६५
असुरास्च रणे मत्ताः कार्ष्णिं शस्त्रैरितस्ततः । जघ्नुः कमलपत्राक्षं परं निस्चयमास्थिताः ।
चिच्छेद बाहून् केषाञ्चित् केयूरवलयोज्ज्वलान् । सकुण्डलानि चान्येषां शिरांस्यपि स चिच्छिदे ।
क्षुरच्छिन्नैः शिरोभिस्तैः कायैस्च शकलैरपि । असुराणां मही कीर्णा प्रद्युम्नेनातितेजसा ।
देवेश्वरो देवगणैः सहितः समितिञ्जयः । ददर्श मुदितो युद्धं भैमानां दितिजैः सह ।
ये गदञ्चैव शाम्बञ्च दैत्याः समभिदुद्रुवुः । ते ययुर्निधनं सर्व्वे यादांसीव महोदधौ । ८८७०
विषमं तत्तदा युद्धं दृष्ट्वा देवपतिर्हरिः । गदाय प्रेषयामास स्वं रथं हरिवाहनः ।

दिदेश मातलिसुतं यन्तारञ्च सुवर्चसं । शाम्बाश्वैरावणं नाम प्रेषयामास चेश्वरः ।
जयन्तं रौक्मिणेयस्य सहायमददद्विभुः । ऐरावणमधिष्ठातुं प्रवरं संप्रयुक्तवान् ।
देवपुत्त्रद्विजौ वीरावप्रमेयपराक्रमौ । अनुज्ञाप्य सुराध्यक्षं ब्रह्माणं लोकभावनं ।
तं मातलिसुतश्चैव गजमैरावतं तदा । देवः प्रेषितवान् शक्रो विधिज्ञो वरकर्म्मसु । ८८७५
क्षीणमस्य तपो वध्यो यदूनामेष दुर्म्मतिः । प्रदिशन्ति तु भूतानि सर्व्वञ्च तु यथेप्सितं ।
प्रद्युम्नस्य जयन्तस्य प्राप्तौ हर्म्म्यं महाबलौ । असुरान् शरजालौघैर्व्विक्रामन्तौ प्रणाश्य तु ।
गदं कार्ष्णिस्तदोवाच दुर्व्वार्य्यं रणदुर्ज्जयः । उपेन्द्रानुज शक्रेण रथोऽयं प्रेषितस्तव ।
हरियुङ्मातलिसुतो यन्ता चायं महाबलः । प्रवराधिष्ठितश्चायं शाम्बस्यैरावणो गजः ।
अयोपहारी रुद्रस्य दारकार्थो महाबलः । श्व एष्यति हृषीकेशस्तस्मिन् हृत्तेऽच्युतानुज । ८८८०
तस्याज्ञया वधिष्यामो वज्रनाभं सबान्धवं । अभ्युत्थानकृतं पापं त्रिपिष्टपजयं प्रति ।
करिष्यामो विधानन्तु नैष शक्यं सुतान्वितं । विजिघत्स्यप्रमादन्तु कर्त्तव्यमिति मे मतिः ।
कलत्ररक्षणं कार्य्यं सर्व्वोपायैर्न्नरैर्बुधैः । कलत्रधर्षणं लोके मरणादतिरिच्यते ।
एवं सन्दिश्य भैमः स गदशाम्बौ महाबलः । प्रद्युम्नकोप्यः ससृजे मायया दिव्यरूपया ।
तमस्य नाशयामास दैत्यसृष्टं दुरासदं । जहर्षे देवराजश्च तं दृष्ट्वा रिपुमर्द्दनं । ८८८५
ददृशुः सर्व्वभूतानि कार्ष्णिं सर्व्वेषु शत्रुषु । अन्तरात्मनि वर्त्तन्तं क्षेत्रज्ञमिव तं विदुः ।
एवं व्यतीता रजनी रौक्मिणेयस्य युध्यतः । असुराणां त्रिभागश्च निहतो नातितेजसा ।
यावद्धि योधयामास कार्ष्णिर्दैत्यान् रणाजिरे । सन्ध्योपास्ता जयन्तेन तावद्विष्णुपदीजले ।
अयोधयज्जयन्तस्य यावद्दैत्यान्महाबलः । तावदाकाशगङ्गायां भैमः सन्ध्यामुपास्तवान् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभवधे प्रद्युम्नोत्तरे पञ्चपञ्चाशदधिकशततोऽध्यायः ॥ १५५ ॥
॥ वैशम्पायन उवाच ॥ जगतश्चक्षुषि ततस्तमुहूर्त्तोदिते रवौ । प्रादुरासीद्धरिर्देवस्तार्क्ष्येणोरगशत्रुणा । ८८९०
हंसवायुमनोभ्यश्च सुशीघ्रतरगः खगः । तस्थौ वियति शक्रस्य समीपे कुरुनन्दन ।
समेत्य च यथान्यायं कृष्णौ वासवसन्निधौ । पाञ्चजन्यं विधुर्द्ध्मौ दैत्यानां भयवर्द्धनं ।
तं श्रुत्वाऽभ्यागतस्तत्र प्रद्युम्नः परवीरहा । वज्रणाभं जहीत्युक्तः केशवेन त्वरेति च ।
तार्क्ष्यमारुह्य गच्छेति पुनरेव प्रचोदितः । चकार स तथा वीरः प्रणिपत्य सुरोत्तमौ ।
स मनोरंहसा वीरस्तार्क्ष्येणाशु ययौ नृप । अभ्यासं वज्रनाभस्य महाहन्दस्य भारत । ८८९५
ततस्तार्क्ष्यगतो वीरस्ततर्द्द रणमूर्द्धनि । वज्रणाभं स्थिरो भूत्वा सर्व्वास्त्रविदनिन्दितः ।
तेन तार्क्ष्यगतेनैव गदया कृष्णसूनुना । उरस्यभिहतो वीरो वज्रणाभो महात्मना ।
स तेनाभिहतो वीरो दैत्यो मोहवशङ्गतः । चकार च भृशं रक्तं बभ्राम च गतासुवत् ।
आश्वसेत्यथ तं कार्ष्णिरुवाच रणदुर्ज्जयः । लब्धसंज्ञः स वीरस्तु प्रद्युम्नमिदमब्रवीत् ।
साधु यादव वीर्य्येण श्लाघ्यो मम रिपुर्भवान् । प्रतिप्रहारकालोऽयं स्थिरो भव महाबल । ८९००

एवमुक्त्वा महानादं मुक्त्वा भीमपराक्रमं । गदां मुमोच वेगेन सघण्टां बहुकण्टकां ।
तया ललाटेऽभिहतः प्रद्युम्नो गदया नृप । उद्वमन् रुधिरं भूरि मुमोह यदुपुङ्गवः ।
तं दृष्ट्वा भगवान् कृष्णः पाञ्चजन्यं जलोद्भवं । दध्मावाश्वासनकरं पुत्रस्य रिपुनाशनः ।
तं पाञ्चजन्यशब्देन प्रत्याश्वस्तं महाबलं । दृष्ट्वा प्रमुदिता लोका विशेषेणेन्द्रकेशवौ ।
तस्य चक्रं करे यातं कृष्णच्छन्देन भारत । क्षुरनेमिसहस्रारं दैत्यचक्रकुलान्तकं । ८९०५
तन्मुमोचाच्युतसुतः शत्रुनाशाय भारत । नमस्कृत्वा सुरेन्द्राय नमस्कृत्वा महात्मने ।
वज्रनाभस्य तत्कायादुच्चकर्त्त शिरस्तदा । नारायणसुतोत्सृष्टं दैत्यानामनुपश्यतां ।
गदः सुनाभमवधीद्यतमानं रणाजिरे । हर्म्यपृष्ठे जिघांसन्तं रणदृप्तं भयानकं ।
शाम्बः समरमध्यस्थानसुरानरिमर्द्दनः । निनाय निशितैर्बाणैः प्रेताधिपपरिग्रहं ।
निकुम्भस्तु हते वीरे वज्रनाभे महासुरे । जगाम षट्पुरं वीरो नारायणशरार्द्दितः । ८९१०
निवर्हिते रिपौ तस्मिन् वज्रनाभे दुरासदे । अवतीर्णौ महात्मानौ हरी वज्रपुरं तदा ।
सम्प्रशमनञ्चैव चक्रतुः सुरसत्तमौ । बान्धवानामथतुष्टैव बालवृद्धं भयार्द्दितं ।
इन्द्रोपेन्द्रौ महात्मानौ मन्त्रयित्वा महाबलौ । आयत्याञ्च तदात्वे च बृहस्पतिमतानुगौ ।
वज्रनाभस्य तद्राज्यं चतुर्द्धा चक्रतुर्नृप । विजयस्य चतुर्भागं जयन्ततनयस्य तु ।
प्रद्युम्नस्य चतुर्भागं रौक्मिणेयसुतस्य च । चन्द्रप्रभस्य ददतुश्चतुर्भागं जनेश्वर । ८९१५
कोट्यस्ततस्तो ग्रामाणामधिकास्ता विशाम्पते । शाखापुरसहस्राञ्च स्फीतं वज्रपुरोपमं ।
चतुर्द्धा चक्रतुस्तत्र संहृष्टौ शक्रकेशवौ । कम्बलाजिनवासांसि रत्नानि विविधानि च ।
चतुर्द्धा चक्रतुर्व्वीरौ वीर वासवकेशवौ । ततोऽभिषिक्तास्ते वीरा राजानो वासवाज्ञया ।
देवदुन्दुभिवाद्येन नृप विष्णुपदीजलैः । स्वयं शक्रेण देवेन केशवेन च धीमता ।
ऋषिवंशे महात्मानः शक्रमाधवनन्दनाः । विजयस्य प्रसिद्धैव मतिर्वियति धीमतः । ८९२०
मातृजेन गुणेनापि माधवानां महात्मनां । अभिषिच्य जयन्तस्तु वासवो भगवान् ब्रवीत् ।
त्वयैते वीर संरक्ष्या राजानः समितिञ्जय । मम वंशकरो ह्येकः केशवस्य त्रयोऽनघ ।
अवध्याः सर्व्वभूतानां भविष्यन्ति ममाज्ञया । गमनागमनञ्चैव दिवि सिद्धं भविष्यति ।
त्रिपिष्टपं द्वारकाञ्च रम्यां भैमाभिरर्च्चितां । दिग्गजप्रसूतानाम् हयांश्चोच्चैःश्रवोऽन्वयान् ।
इच्छयैषां प्रयच्छस्व रथांस्त्वष्टृकृतानपि । गजावैरावणसुतौ शत्रुञ्जयरिपुञ्जयौ । ८९२५
प्रयच्छाकाशगौ वीर शाम्बस्य च गदस्य च । आकाशेन पुरीं यातुं द्वारकां भैमरक्षितां ।
आयातौ च सुतौ द्रष्टुं यथेष्टं भैमनन्दनौ । इति सन्दिश्य भगवान् देवराजः पुरन्दरः ।
जगाम भगवान् स्वर्गं द्वारकामपि केशवः । पश्चात्तावनुयातस्तत्र गदः प्रद्युम्न एव च ।
शाम्बश्च द्वारकां यातास्ते राज्ये महाबलाः । अद्यापि तानि राज्यानि मेरोः पार्श्वे नृपोत्तरे ।
स्थास्यन्ति च जगद्यावत् स्वास्थ्यममरसन्निभ । निवृत्ते मौषले युद्धे स्वर्गं यातेषु वृष्णिषु । ८९३०

दिदेश मातलिसुतं यन्तारञ्च सुवर्चसं । शाम्बायैरावणं नागं प्रेषयामास चेश्वरः ।
जयन्तं रौक्मिणेयस्य सहायमददद्विभुः । ऐरावणमधिष्ठातुं प्रवरं संप्रयुक्तवान् ।
देवपुत्रद्विजौ वीरावप्रमेयपराक्रमौ । अनुज्ञाप्य सुराध्यक्षं ब्रह्माणं लोकभावनं ।
तं मातलिसुतश्चैव गजमैरावतं तदा । देवः प्रेषितवान् शक्रो विधिज्ञो वरकर्मसु । ८८७५
क्षीणमस्य तपो वध्यो यदूनामेष दुर्मतिः । प्रदिशन्ति तु भूतानि सर्व्वंच तु यथेप्सितं ।
प्रद्युम्नस्य जयन्तस्य प्राप्तौ हर्म्ये महाबलौ । असुरान् शरजालौघैर्व्विक्रामन्तौ प्रणाश्य तु ।
गदं कार्ष्णिस्तदोवाच दुर्व्वार्य्यं रणदुर्ज्जयः । उपेन्द्रानुज शक्रेण रथोऽयं प्रेषितस्तव ।
हरियुङ्मातलिसुतो यन्ता चायं महाबलः । प्रवराधिष्ठितश्चायं शाम्बस्यैरावणो गजः ।
अद्योपहारी रुद्रस्य दारकार्थो महाबलः । श्व एष्यति हृषीकेशस्तस्मिन् हृत्तेऽच्युतानुज । ८८८०
तस्याज्ञया वधिष्यामो वज्रनाभं सबान्धवं । अभ्युत्थानकृतं पापं त्रिपिष्टपजयं प्रति ।
करिष्यामो विधानन्तु नैष शक्तुं सुताम्वितं । विजेयत्यप्रमादन्तु कर्त्तव्यमिति मे मतिः ।
कलत्ररक्षणं कार्य्यं सर्व्वोपायैर्नरैर्बुधैः । कलत्रधर्षणं लोके मरणादतिरिच्यते ।
एवं सन्दिश्य भैमः स गदशाम्बौ महाबलः । प्रद्युम्नकोप्यः सस्रजे मायया दिव्यरूपया ।
तमस्य नाशयामास दैत्यसृष्टं दुरासदं । अरूपे देवराजस्य तं दृष्ट्वा रिपुमर्द्दनं । ८८८५
ददृशुः सर्व्वभूतानि कार्ष्णिं सर्व्वेषु शत्रुषु । अन्तरात्मनि वर्त्तन्तं चेतश्चमिव तं विदुः ।
एवं व्यतीता रजनी रौक्मिणेयस्य युध्यतः । असुराणां त्रिभागश्च निहतो नातितेजसा ।
यावद्धि योधयामास कार्ष्णिर्दैत्यान् रणाजिरे । सन्ध्योपास्ता जयन्तेन तावद्विष्णुपदीजले ।
अयोधयज्जयन्तस्य यावद्दैत्यान्महाबलः । तावदाकाशगङ्गायां भैमः सन्ध्यामुपास्तवान् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वज्रनाभवधे प्रद्युम्नोत्तरे पञ्चपञ्चाशदधिकशततोऽध्यायः ॥ १५५ ॥
॥ वैशम्पायन उवाच ॥ जगतश्चक्षुषि तर्तास्तमुहूर्त्तोदिते रवौ । प्रादुरासीद्धरिर्देवस्तार्क्ष्येणोरगशत्रुणा । ८८९०
हंसवायुमनोभ्यश्च सुशीघ्रतरगः खगः । तस्थौ वियति शक्रस्य समीपे कुरुनन्दन ।
समेत्य च यथान्यायं कृष्णो वासवसन्निधौ । पाञ्चजन्यं विमुर्द्ध्मौ दैत्यानां भयवर्द्धनं ।
तं श्रुत्वाऽभ्यागतस्तत्र प्रद्युम्नः परवीरहा । वज्रणाभं जहीत्युक्तः केशवेन त्वरेति च ।
तार्क्ष्यमारुह्य गच्छेति पुनरेव प्रचोदितः । चकार स तथा वीरः प्रणिपत्य सुरोत्तमौ ।
स मनोरंहसा वीरस्तार्क्ष्येणाशु ययौ नृप । अभ्याशं वज्रनाभस्य महादन्दस्य भारत । ८८९५
ततस्तार्क्ष्यगतो वीरस्ततद्दै रणमूर्द्धनि । वज्रणाभं स्थिरो भूत्वा सर्व्वांस्तविदर्णिन्दितः ।
तेन तार्क्ष्यगतेनैव गदया कृष्णसूनुना । उरस्यभिहतो वीरो वज्रणाभो महात्मना ।
स तेनाभिहतो वीरो दैत्यो मोहवशङ्गतः । चकार च स्रग्नं रक्तं बभ्राम च गतासुवत् ।
आश्वसेत्यथ तं कार्ष्णिरुवाच रणदुर्ज्जयः । लब्धसंज्ञः स वीरस्तु प्रद्युम्नमिदमब्रवीत् ।
साधु यादव वीर्य्येण श्लाघ्यो मम विभुर्भवान् । प्रतिप्रहारकालोऽयं स्थिरो भव महाबल । ८९००

एवमुक्त्वा महानादं मुक्त्वा मेघसमोपमं । गदां मुमोच वेगेन सघण्टां बद्धकण्टकां ।
तया ललाटेऽभिहतः प्रद्युम्नो गदया नृप । उद्वमन्रुधिरं भूरि मुमोह यदुपुङ्गवः ।
तं दृष्ट्वा भगवान् कृष्णः पाञ्चजन्यं समाह्वयं । दध्मावाश्वासनकरं पुत्रस्य रिपुनाशनः ।
तं पाञ्चजन्यशब्देन प्रत्याश्वस्तं महाबलं । दृष्ट्वा प्रमुदिता लोका विशेषेणेन्द्रकेशवौ ।
तस्य चक्रं करे यातं कृष्णच्छन्देन भारत । क्षुरनेमिसहस्रारं दैत्यसङ्घकुलान्तकं । ८९०५
तन्मुमोचाच्युतसुतः प्रणम्याथ भारत । नमस्कृत्वा सुरेन्द्राय नमस्कृत्वा महात्मने ।
वज्रनाभस्य तत्कायादुच्चकर्त्त शिरस्तदा । नारायणसुतोन्मुक्तं दैत्यानामनुपश्यतां ।
गदः सुनाभमवधीद्यतमानं रणाजिरे । हर्म्यपृष्ठे जिघांसन्तं रणदृप्तं भयानकं ।
साम्बः समरमध्यस्थानसुरानरिमर्द्दनः । निनाय निशितैर्बाणैः प्रेताधिपपरिग्रहं ।
निकुम्भस्तु हते वीरे वज्रनाभे महासुरे । जगाम षट्पुरं वीरो नारायणभयार्द्दितः । ८९१०
निवर्हिते रिपौ तस्मिन् वज्रनाभे दुरासदे । अवतीर्णौ महात्मानौ हरी वज्रपुरं तदा ।
लब्धप्रशमनञ्चैव चक्रतुः सुरसत्तमौ । सान्त्वयामासतुश्चैव भालवृद्धं भयार्द्दितं ।
इन्द्रोपेन्द्रौ महात्मानौ मन्त्रयित्वा महाबलौ । आयत्याञ्च तदात्वे च बृहस्पतिमतानुगा ।
वज्रनाभस्य तद्राज्यं चतुर्द्धा चक्रतुर्नृप । विजयस्य चतुर्भागं जयन्ततनयस्य तु ।
प्रद्युम्नस्य चतुर्भागं रौक्मिणेयसुतस्य च । चन्द्रप्रभस्य ददतुश्चतुर्भागं जनेश्वर । ८९१५
कोट्यस्तस्तो ग्रामाणामधिकास्ता विशाम्पते । शाखापुरसहस्राञ्च स्फीतं वज्रपुरोपमं ।
चतुर्द्धा चक्रतुस्तत्र संहृष्टौ शक्रकेशवौ । कम्बलाजिनवासांसि रत्नानि विविधानि च ।
चतुर्द्धा चक्रतुर्व्वीरौ वीर वासवकेशवौ । ततोऽभिषिक्तास्ते वीरा राजानो वासवाज्ञया ।
देवदुन्दुभिवाद्येन नृप विष्णुपदीजलैः । स्वयं शक्रेण देवेन केशवेन च धीमता ।
अभिषिक्ता महात्मानः शक्रमाधवनन्दनाः । विजयस्य प्रसिद्धैव गतिर्वियति धीमतः । ८९२०
मातृजेन गुणेनापि माधवानां महात्मनां । अभिषिच्य जयन्तन्तु वासवो भगवान् ब्रवीत ।
त्वय्येते वीर संरक्ष्या राजानः समितिञ्जय । मम वंशकरो ह्येकः केशवस्य चयोऽनघ ।
अवध्याः सर्व्वभूतानां भविष्यन्ति ममाज्ञया । गमनागमनञ्चैव दिवि सिद्धं भविष्यति ।
त्रिपिष्टपं द्वारकाञ्च रम्यां भैमाभिरर्च्चितां । दिशाणभपुताजाणाम् हयांश्चोच्चैःश्रवोऽन्वयान् ।
ददावथैषां प्रयच्छस्व रथांस्त्वष्टृकृतानपि । गजावैरावणसुतौ शत्रुञ्जयरिपुञ्जयौ । ८९२५
प्रयच्छाकाशगौ वीर साम्बस्य च गदस्य च । आकाशेन पुरीं यातुं द्वारकां भैमरच्चितां ।
आयातौ च सुतौ द्रष्टुं यथेष्टं भैमनन्दनौ । इति सन्दिश्य भगवान् देवराजः पुरन्दरः ।
जगाम भगवान् स्वर्गं द्वारकामपि केशवः । षण्मासानुषितस्तत्र गदः प्रद्युम्न एव च ।
साम्बश्च द्वारकां यातास्ते राज्ये महाबलाः । अद्यापि तानि राज्यानि मेरोः पार्श्वे नृपोत्तरे ।
स्थास्यन्ति च जगद्यावत् स्थास्यत्यमरसन्निभ । निहते भीषणे युद्धे स्वर्गं यातेषु वृष्णिषु । ८९३०

जीवितस्य हि सन्देहं चयं वै स्वजनस्य च। कामार्त्ता हि न पश्यन्ति दूषणं वै कुलस्य च।
प्रयत्नो युज्यते कार्य्येष्विति शास्त्रनिदर्शनं । तस्य शक्ता विशालाक्षी दारकायाः प्रवेशने।
संस्तुताऽसि मया भीरु कुरु मे प्रियदर्शनं ।
॥ चित्रलेखोवाच ॥ सर्व्वतः संस्तुता तेऽहं वाक्यैरमृतकल्पितैः । कारिता च समुद्योगं प्रियैः कान्तैश्च भाषितैः ।
एषा गच्छाम्यहं भीरु चिप्रं तां दारकापुरीं । भर्त्तारमानयाम्यद्य तव वृष्णिकुलोद्वहं । १००२०
अनिरुद्धं महाबाहुं प्रविश्य दारकां पुरीं । सा वचस्तथ्यमशिवं दानवानां भयावहं ।
इत्युक्त्वाऽन्तर्हिता चिप्रं चित्रलेखा मनोजवा । सखीभिः सहिता स्नुषा चिन्तयन्ती स्थिता तु सा ।
तृतीये तु मुहूर्त्ते सा नष्टा वाणपुरात्तदा । सखी प्रियं चिकीर्षन्ती पूजयन्ती तपोधनान् ।
चणेन समनुप्राप्ता दारकां कृष्णपालितां । कैलासशिखराकारैः प्रासादैरुपशोभितां ।
ददर्श दारकाञ्चैव दिवि तारामिव स्थितां । १००२५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे दूतीसंप्रेषणे षट्सप्तत्यधिकशततोऽध्यायः ॥ १७६ ॥
॥ वैशम्पायन उवाच ॥ अथ दारवतीम्प्राप्य स्थिता सा भवनान्तिके। प्रवृत्तिहरणार्थाय चित्रलेखा व्यचिन्तयत्।
अथ चिन्तयती सा तु बुद्धिं बुद्ध्यर्थनिश्चितां । अपश्यन्नारदं तत्र ध्यायन्तमुदके मुनिं ।
तं दृष्ट्वा चित्रलेखा तु हर्षेणोत्फुल्ललोचना । उपसृत्याभिवाद्येनमधोमुखमवस्थिता ।
नारदस्त्वाशिषं दत्त्वा चित्रलेखामथाब्रवीत् । किमर्थमिह संप्राप्ता श्रोतुमिच्छामि तत्त्वतः ।
देवर्षिमथ तं दिव्यं नारदं लोकपूजितं । कृताञ्जलिपुटा भूत्वा चित्रलेखाऽब्रवीद्वचः । १००३०
भगवन् श्रूयतां वाक्यं दौत्येनाहमिहागता । अनिरुद्धं मुने नेतुं यदर्थञ्च शृणुष्व मे ।
नगरे शोणितपुरे वाणो नाम महासुरः । तस्य कन्या वरारोहा नाम्नोषेति च विश्रुता ।
भगवन् साऽनुरक्ता च प्राद्युम्निं पुरुषोत्तमं । देव्या वरनिसर्गेण तस्या भर्त्ता विनिर्म्मितः ।
तस्य नेतुमिहायाता तत्र सिद्धिं विधत्स्व मे । मया नीतेऽनिरुद्धे तु नगरं शोणिताह्वयं ।
प्रवृत्तिः पुण्डरीकाचे त्वयाख्येया महामुने । अवश्यं भविता चैव कृष्णेन सह विग्रहः । १००३५
वाणस्य सुमहान् संख्ये दिव्यो हि स महासुरः । न च शक्तोऽनिरुद्धस्तं युद्धे जेतुं महासुरं ।
सहस्रबाहुमायान्तं जयेत् कृष्णो महाभुजः । भगवन् सन्निकर्षन्ते यदर्थमहमागता ।
कथं हि पुण्डरीकाचो ज्ञापितस्तदिदं भवेत् । त्वत्प्रसादाच्च भगवन्न मे कृष्णाद्भयं भवेत् ।
स हि तत्त्वार्थवृत्तिस्तु अनिरुद्धः कथं ह्रियेत् । क्रुद्धो हि स महाबाहुस्त्रैलोक्यमपि निर्द्दहेत् ।
पौत्रशोकाभिसन्तप्तः शापेन स दहेत मां । तत्रोपायञ्च भगवन् चिन्तितुं वै त्वमर्हसि । १००४०
यथा स्नुषा लभेत् कान्तं मम चैवाभयं भवेत् । इत्येवमुक्तो भगवांश्चित्रलेखां स नारदः ।
तामुवाच शुभं वाक्यं मा भैस्त्वं समयं शृणु । त्वया नीतेऽनिरुद्धे तु कन्यावेश्म प्रवेशिते ।
यदि युद्धं भवेत्तत्र स्मर्त्तव्योऽहं तदा त्वया । एष मे परमः कामो युद्धं द्रष्टुमिहानघे ।
यद्दृष्ट्वा च भवेत् प्रीतिः प्रवृत्तिस्च दृढा भवेत् । गृह्यतां तामसी विद्या सर्व्वलोकप्रमोहनी ।

कृतकृत्यश्च ते देवि एष विद्यां ददाम्यहं । एवमुक्ते तु वचने नारदेन महर्षिणा । १००४५
तथेति वचनं प्राह चित्रलेखा मनोजवा । अभिवाद्य महात्मानमृषीणां नारदं वरं ।
निरैक्षतानिरुद्धस्य गृहञ्चैवान्तरिक्षगा । ततो द्वारवतीमध्ये कामस्य भवनं शुभं ।
तत्समीपेऽनिरुद्धस्य भवनं सा स्म पश्यति । सौवर्णवेदिकाकुम्भं रुक्मवैदूर्य्यतोरणं ।
माल्यदामावसक्तञ्च पूर्णकुम्भोपशोभितं । वर्हिकण्ठनिभग्रीवं प्रासादैरेकसन्नयैः ।
मणिप्रवालसंस्तीर्णं दिव्यगन्धर्व्वनादितं । ततो द्वारवतीमध्ये प्रसादैरुपशोभितं । १००५०
ददर्श भवनं यत्र प्राद्युम्निरवसत् सुखं । ततः प्रविश्य सहसा भवनन्तस्य तन्महत् ।
तत्रानिरुद्धं साऽपश्यच्चित्रलेखा वराप्सराः । मध्ये परमनारीणां तारापतिमिवोदितं ।
क्रीडाविहारे नारीभिः सेव्यमानमितस्ततः । पिवन्तं मधुमाध्वीकं श्रिया परमया युतं ।
वरासनगतं तत्र यथैवेलविलन्तथा । वाद्यते समतालञ्च गीयते मधुरं तथा ।
न च तस्य मनस्तत्र तमेवार्थमचिन्तयत् । स्त्रियः सर्व्वगुणोपेता नृत्यन्ते तत्र तत्र वै । १००५५
न चास्य मनसस्तुष्टिं चित्रलेखा प्रपश्यति । न चाभिरमते भोगैर्न चापि मधु सेवते ।
व्यक्तमस्य हि स स्वप्नो हृदि संपरिवर्त्तते । इति तत्रैव बुद्धा च निश्चिता गतसाध्वसा ।
सा दृष्ट्वा परमस्त्रीणां मध्ये शक्रध्वजोपमं । चिन्तयाविष्टहृदया चित्रलेखा मनस्विनी ।
कथं कार्य्यमिदं कार्य्यं कथं स्वस्ति भवेदिति । साऽन्तर्हिता चिन्तयित्वा चित्रलेखा यशस्विनी ।
तामस्याच्छादयामास विद्यया शुभलोचना । हर्म्ये स्त्रीगणमध्यस्थं दृष्ट्वा चान्तर्हिता तदा । १००६०
ततोऽन्तरिक्षादेवाशु प्रासादोपरि विष्ठिता । प्राद्युम्निं वचनं प्राह श्लक्ष्णं मधुरया गिरा ।
चक्षुर्हत्वा च सा तस्मै कृत्वा चात्मनि दर्शनं । तासाञ्चैवाश्रवे देशे सा वाक्यमिदमब्रवीत् ।
अपि ते कुशलं वीर सर्व्वत्र यदुनन्दन । अहस्तावत् प्रदोषो वा कच्चिद्गच्छति ते सुखं ।
शृणुष्व त्वं महाबाहो विज्ञाप्यं मे रतीसुत । ऊषाया मम सख्यास्तु वाक्यं वक्ष्यामि तत्त्वतः ।
स्वप्ने तु या त्वया दृष्टा स्त्रीभावश्चापि लम्भिता । बिभर्त्ति हृदये या त्वां तया संप्रेषिता ह्यहं । १००६५
रुदती जृम्भती चैव निश्वसन्ती मुहुर्मुहुः । त्वद्दर्शनपरा सौम्य कामिनी परितप्यते ।
यदि त्वं यास्यसे वीर धारयिष्यति जीवितं । अदर्शनेन मरणं तस्या नास्त्यत्र संशयः ।
यदि नारीसहस्रं ते गृहस्थं यदुनन्दन । स्त्रियाः कामयमानायाः कर्त्तव्या हस्तधारणा ।
त्वञ्च तस्या वरोत्सर्गे देव्या दत्तो मनोरथः । चित्रपट्टं मया दत्तं त्वच्चिह्नं वीक्ष्य जीवति ।
तदुत्सङ्गे समारोप्य जीवते दर्शनेप्सया । सानुक्रोशो यदुश्रेष्ठ भव तस्या मनोरथे । १००७०
ऊषा ते पतते मूर्द्ध्ना वयस्य यदुनन्दन । श्रूयताञ्चोद्भवस्तस्याः कुलं शीलञ्च यादृशं ।
संस्थानं प्रकृतिश्चास्याः पितरञ्च ब्रवीमि ते । वैरोचनिसुतो वीरो वाणो नाम महासुरः ।
स राजा शोणितपुरे तस्य त्वामिच्छते सुता । त्वद्भावगतचित्ता सा त्वाम्हते न हि जीवति ।
मनोरथकृतो भर्त्ता देव्या दत्तोऽस्यसंशयं । त्वत्कृतमात्मा सुश्रोणी प्राणान्धारयते शुभा ।

चित्रलेखावचः श्रुत्वा सोऽनिरुद्धोऽब्रवीदिदं । दृष्टा स्वप्ने मया सा हि तन्मत्तः शृणु शोभने । १००७५
रूपं कान्तिं गतिञ्चैव संयोगं हसितं तया । एवं सर्व्वमशेषाणां मुह्यामि परिचिन्तयन् ।
यद्यहं समनुग्राह्यो यदि सख्यं त्वमिच्छसि । नयस्व चित्रलेखे मां द्रष्टुमिच्छाम्यहं प्रियां ।
ईप्सितं तस्य विज्ञाय साऽनिरुद्धस्य भाविनी । चित्रलेखा ततस्तुष्टा तथेति च तमब्रवीत् ।
हर्म्म्ये स्त्रीगणमध्यस्थं कृत्वा चान्तर्हितं तदा । उत्पपात गृहीत्वा सा प्राद्युम्निं युद्धदुर्म्मदं ।
सा तमध्वानमागम्य सिद्धचारणसेवितं । सहसा शोणितपुरं प्रविवेश मनोजवा । १००८०
अदर्शनं तमानीय मायया कामरूपिणी । अनिरुद्धसमेता सा यत्रोषा तत्र गच्छती ।
ऊषायादर्शयच्चैनं चित्राभरणभूषितं । चित्रायुधधरं वीरं कन्दर्पसमरूपिणं ।
तत्रोषा विस्मिता दृष्ट्वा हर्म्म्यस्था सखिसन्निधौ । प्रवेशयामास च तं सा तदा स्वगृहं ततः ।
प्रहर्षोत्फुल्लनयना प्रियं दृष्ट्वाऽर्थकोविदा । सा हर्म्म्यस्था तमर्घ्येण यादवं समपूजयत् ।
चित्रलेखां परिष्वज्य प्रियाख्यानैर्नियुज्य च । त्वरितं कामिनी प्राह चित्रलेखां भयातुरा । १००८५
सखीदं वै कथं गुह्यं कार्य्यं कार्य्यविशारदे । गुह्ये कृते भवेत् स्वस्ति प्रकाशे जीवितक्षयः ।
चित्रलेखाऽब्रवीद्वाक्यं शृणु त्वं निश्चयं सखि । कृतं पुरुषकारं हि दैवं नाशयते क्षणात् ।
यदि देव्या प्रसादस्ते अनुकूलो भविष्यति । अप्रमादात् कृतं गुह्यं न कश्चित् ज्ञास्यते नरः ।
सख्या तथैवमुक्ता सा पर्य्यवस्थितचेतना । एवमेतदिति प्राह साऽनिरुद्धमिदम्वचः ।
दिष्ट्या स्वप्नगतश्चौरो दृश्यते सुभगो जनः । यत्कृते तु वयं खिन्ना दुर्लभप्रियकाम्यया । १००९०
कच्चित्तव महाबाहो कुशलं सर्व्वतो गतं । हृदयं हि मृदु स्त्रीणामेवं पृच्छाम्यहं तव ।
तस्यास्तद्वचनं श्रुत्वा ऊषायाः श्लक्ष्णमर्थवत् । सोऽप्याह यदुशार्दूलः शुभाक्षरतरं वचः ।
हर्षविप्लुतनेत्रायाः पाणिनाऽश्रु प्रमृज्य च । प्रहस्य सस्मितं प्राह हृदयग्राहकं वचः ।
कुशलं मे वरारोहे सर्व्वत्र मितभाषिणि । त्वत्प्रसादाच्च सन्देहः प्रियमावेदयामि ते ।
अदृष्टपूर्व्वश्च मया देशोऽयं शुभदर्शने । निशि स्वप्ने मया दृष्टं सहसा कन्यापुरं महत् । १००९५
एवमेव ह्यहं भीरु त्वत्प्रसादादिहागतः । न च तद्रुद्रपत्न्या वै मिथ्या वाक्यं भविष्यति ।
देव्याश्च प्रीतिमाज्ञाय त्वत्प्रियार्थञ्च भाविनि । अनुप्राप्तोऽस्मि चाद्यैव प्रसीद शरणङ्गतः ।
इत्युक्ता त्वरमाणा सा गुह्ये देशे स्वलङ्कृता । कान्तेन सह संयुक्ता स्थिता वै भीतभीतवत् ।
ततस्तोदाहधर्म्मेण गान्धर्व्वेण समेत्य च । अन्योन्यं रेमतुस्तौ तु चक्रवाकौ यथा दिवा ।
कान्तेन सह संयुक्ता दिव्यस्रगनुलेपना । रममाणाऽनिरुद्धेन अविज्ञाता तु सा तदा । ११०००
तस्मिन्नेव क्षणे प्राप्तो यदूनामृषभो हि सः । दिव्यमाल्याम्बरधरो दिव्यस्रगनुलेपनः ।
ऊषया सह संयुक्तो विज्ञातो वाणरक्षिभिः । ततस्तैस्तारपुरुषैर्व्वाणस्यावेदितं द्रुतं ।
यथादृष्टमशेषेण कन्यायास्तद्व्यतिक्रमं । ततः किङ्करसैन्यं तत् व्यादिष्टं भीमकर्म्मणा ।
बलिपुत्रेण वाणेन वीरेणामित्रघातिना । गच्छध्वं सहिताः सर्व्वे हन्यतामेष दुर्म्मतिः ।

येन नः कुलचारित्र्यं दूषितं दूषितात्मना । ऊषायां धर्षितायां हि कुलं नो धर्षितं महत् । ११००५
असम्प्रदत्तां योऽस्माभिः स्वयंग्राहमधर्षयत् । अहो वीर्य्यमहो धैर्य्यमहो धार्ष्ट्यञ्च दुर्म्मतेः ।
यः पुरं भवनञ्चेदं प्रविष्टो नः सुबालिशः । एवमुक्त्वा पुनस्तान् स किङ्करानभ्यचोदयत् ।
ते तस्याज्ञामथो गृह्य सुसन्नद्धा विनिर्ययुः । यत्रानिरुद्धो ह्यभवत् तत्रागच्छन्महाबलाः ।
नानाशस्त्रोद्यतकरा नानारूपा भयङ्कराः । दानवाः समभिक्रुद्धाः प्राद्युम्निवधकाङ्क्षिणः ।
तस्य सैन्यस्य निनदं श्रुत्वाऽभ्यागच्छतस्ततः । सहसैवोत्थितः शूरः प्राद्युम्निः किमिति ब्रुवन् । ११०१०
अथापश्यत तत् सैन्यं नानाप्रहरणोद्यतं । स्थितं समन्ततस्तच्च परिवार्य्य गृहं महत् ।
रुदती तद्बलं दृष्ट्वा वाष्पेणावृतलोचना । प्राद्युम्निवधभीता सा वाणपुत्री यशस्विनी ।
ततस्तु रुदतीं दृष्ट्वा तामूषां मृगलोचनां । हाहा कान्तेति वेपन्तीमनिरुद्धोऽभ्यभाषत ।
अभयं तेऽस्तु सुश्रोणि मा भैस्त्वं हि मयि स्थिते । सम्प्राप्तो हर्षकालस्ते न तेऽस्ति भयकारणं ।
कृत्स्नोऽयं यदि वाणस्य भृत्यवर्गो यशस्विनि । आगच्छति न मे चिन्ता भीरु पश्याद्य विक्रमं । ११०१५
ततोऽभ्यगच्छत्त्वरितो यत्र तद्दिष्टितं बलं । क्रुद्धः स्वबलमास्थाय सन्दष्टदशनच्छदं ।
ततो युद्धं बलौघानां वाणेयानां निशम्य तु । सा चित्रलेखाऽस्मरत नारदं देवदर्शनं ।
ततो निमेषमात्रेण सम्प्राप्तो मुनिपुङ्गवः । स्थतोऽथ चित्रलेखायाः पुरं शोणितसाह्वयं ।
अन्तरीक्षे स्थितस्तत्र सोऽनिरुद्धमथाब्रवीत् । मा भयं स्वस्ति ते वीर प्राप्तोऽस्म्यभिमतस्तव ।
ततस्तु नारदं दृष्ट्वा सोऽभिवाद्य महाबलः । प्रहृष्टः सुमना भूत्वा युद्धार्थमभ्यवर्त्तत । ११०२०
ततस्तेषां स्वनं श्रुत्वा सर्व्वेषामेव गर्ज्जतां । सहसैवोत्थितः शूरस्तोत्रार्द्दित इव द्विपः ।
तमापतन्तं दृष्ट्वैव सन्दष्टौष्ठंमहाभुजं । प्रासादाद्यावरोहन्तं भयात्ते विप्रदुद्रुवुः ।
सोऽन्तःपुरद्वारगतं परिघं गृह्य चायसं । बधाय तेषाञ्चिक्षेप नानायुद्धविशारदः ।
ते सर्व्वे वाणवर्षैश्च गदाभिर्मुषलैस्तथा । असिभिः पट्टिशैः शूलैर्निजघ्नूरणगोचराः ।
स हन्यमानो नाराचैः परिघैश्च समन्ततः । दानवैः समभिक्रुद्धैः प्राद्युम्निः शस्त्रकोविदैः । ११०२५
नाक्षुभ्यत् सर्व्वभूतात्मा नदन्मेघ इवोष्णगे । आविध्य परिघं घोरं तेषां मध्ये व्यवस्थितः ।
सूर्य्यो दिवि चरन्मध्ये मेघानामिव सर्व्वतः । दण्डकाष्ठाजिनधरो नारदो हृष्टमानसः ।
साधु साध्विति वै तत्र सोऽनिरुद्धमभाषत । ते हन्यमाना रौद्रेण परिघेणामितौजसा ।
प्राद्रवन्त भयात् सर्व्वे मेघा वातेरिता इव । विद्राव्य दानवान् वीरः परिघेणाद्भुतविक्रमः ।
अनिरुद्धो रणे हृष्टः सिंहनादं मुमोच ह । घर्म्मान्ते तोयदो व्योम्नि नदन्निव महास्वनं । ११०३०
तिष्ठध्वमिति चुक्रोश दानवान् युद्धदुर्म्मदान् । प्राद्युम्निर्व्वेहनचापि सर्व्वान् शत्रुनिवर्हणः ।
तेन ते समरे सर्व्वे हन्यमाना महात्मना । यतो वाणस्ततो भीता ययुर्युद्धपराङ्मुखाः ।
ततो वाणसमीपस्थाः श्वसन्तो रुधिरोक्षिताः । न शर्म्म लेभिरे दैत्या भयविक्लवलोचनाः ।
मा भैष्ट मा भैष्ट इति राज्ञा तेनाभिभाषिताः । त्रासमुत्सृज्य चैकस्था युध्यध्वं दानवर्षभाः ।

तानुवाच पुनर्व्वाणो भयवित्रस्तलोचनान्। किमिदं लोकविख्यातं यश उत्सृज्य दूरतः। ११०२५
भवन्तो यान्ति वैक्लव्यं क्लीवा इव विचेतसः। कोऽयं यस्य भयत्रस्ता भवन्तो यान्त्यनेकशः।
कुलापदेशिनः सर्व्वे नानायुद्धविशारदाः। भवद्भिर्न्न हि मे कार्य्यं युद्धे साहाय्यमद्य वै।
अब्रवीद्धंसतेत्येवं मत्समीपाच्च नश्यत। अथ तान् वाग्भिरुग्राभिस्त्रासयन्बहुधा बली।
व्यादिदेश रणे शूरानन्यानयुतशः पुनः। प्रमाथगणभूयिष्ठं व्यादिष्टं तस्य निग्रहे।
अनीकं सुमहद्रौद्रं नानाप्रहरणायुधं। अथान्तरीक्षे बहुधा सविद्युद्भिरिवाम्बुदैः। ११०३०
वाणानीकैः समभवद्व्याप्तं संदीप्तलोचनैः। केचित् क्षितिस्थाः प्राक्रोशन् गजा इव समन्ततः।
अन्येऽन्तरीक्षेऽभ्यनदन् घर्म्मान्त इव तोयदाः। ततस्तत् सुमहत् सैन्यं समेतमभवत् पुनः।
तिष्ठ तिष्ठेति च तदा वाचोऽश्रूयन्त सर्व्वशः। अनिरुद्धो रणे वीरः स च तानभ्यवर्त्तत।
तदाश्चर्य्यं समभवद्यदेकस्तैः समागतः। अयुध्यत महावीर्य्यैर्द्दानवैःसह संयुगे।
तेषामेव च जग्राह परिघांस्तोमरानपि। तैरेव च तदा युद्धे तान् जघान महाबलः। ११०३५
पुनः परिघमुत्सृष्टं प्रगृह्य रणमूर्द्धनि। स दैत्यसंघान् समरे निजघान महाबलान्।
निस्त्रिंशं चर्म्म चोत्सृष्टं प्रगृह्य रणमूर्द्धनि। स तेन विचरन्मार्गानेकः शत्रुनिवर्हणः।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विद्रुतं सुतं। इति प्रकारान् द्वात्रिंशद्विचरन्नभ्यदृश्यत।
एकं सहस्रशस्तत्र ददृशुः रणमूर्द्धनि। क्रीडन्तं बहुधा युद्धे व्यादितास्यमिवान्तकं।
ततस्तेनाभिसन्तप्ता रुधिरौघपरिप्लुताः। पुनर्भग्नाः प्राद्रवन्त यत्र वाणो व्यवस्थितः ११०४०
गजवाजिरथौघैस्ते उह्यमानाः समन्ततः। कृत्वा चार्त्तस्वरं घोरं दिशो जग्मुर्म्महौजसः।
एवं भयमभूत्तेषां दानवानां महारणे। एकैकस्योपरि तदा तेऽन्योन्यं भयपीड़िताः।
वमन्तः शोणितं जग्मुर्व्विषादविमुखा रणे। न बभूव पुरा देवैर्युद्धतां तादृशं भयं।
यादृशं युध्यमानानामनिरुद्धेन संयुगे। केचिद्वमन्तो रुधिरं ह्यपतन् वसुधातले।
दानवा गिरिशृङ्गाभा गदाशूलासिपाणयः। ते वाणमुत्सृज्य रणे जग्मुर्भयसमाकुलाः। ११०४५
विशालमाकाशतलं दानवा निर्ज्जितारणे। निःशेषमग्नां महतीं दृष्ट्वा तां वाहिनीन्तदा।
वाणः क्रोधात् प्रजज्वाल समिद्धोऽग्निरिवाध्वरे। अन्तरीक्षचरो भूत्वा साधुवादी समन्ततः।
नारदोऽनृत्यत प्रीत्या ह्यनिरुद्धस्य संयुगे। एतस्मिन्नन्तरे चैव वाणः परमकोपनः।
कुम्भाण्डसंगृहीतं तु रथमास्थाय वीर्य्यवान्। ययौ यत्रानिरुद्धो वै उद्यतायोरणे स्थितः।
पट्टिशासिगदाशूलानुद्यम्य सपरश्वधान्। बभौ बाहुसहस्रेण शक्रो ध्वजशतैरिव। ११०५०
बद्धगोधाङ्गुलित्रैश्च बाहुभिः स महाभुजः। नानाप्रहरणोपेतैः शुशुभे दानवोत्तमः।
सिंहनादं नदन् क्रुद्धो विस्फारितमहाधनुः। अब्रवीत्तिष्ठ तिष्ठेति क्रोधसंरक्तलोचनः।
वाचन्तान्तस्य संश्रुत्य प्राद्युम्निरपराजितः। वाणस्य वदतः संख्ये तदैव ततोऽहसत्।
किङ्किणीजालनिर्घोषं रक्तध्वजपताकिनं। ऋक्षचर्म्मावनद्धाङ्गं दशनल्वमहारथं।

तस्य वाजिसहस्रन्तु रथे युक्तं महात्मनः । पुरा देवासुरे युद्धे हिरण्यकशिपोरिव । ११०६५
तमापतन्तं ददृशे दानवं यदुनन्दनः । संप्रहृष्टस्ततो युद्धे तेजसा चाप्यपूर्य्यत ।
असिचर्म्मधरो वीरः स्वस्थः संग्रामलालसः । नरसिंहो यथा पूर्व्वमादिदैत्यवधोद्यतः ।
आपतन्तं ददर्शाथ खड्गचर्म्मधरं तदा । खड्गचर्म्मधरं तन्तु दृष्ट्वा वाणः पदातिनं ।
प्रहर्षमतुलं लेभे प्राद्युम्निवधकाङ्क्षया । तनुत्रेण विहीनस्य खड्गपाणिस्य मानुषः ।
अजेयमिति तं मत्वा युद्धायाभिमुखे स्थितः । अनिरुद्धं रणे वाणो जितकाशी महाबलैः । ११०७०
वाचं प्रोवाच संक्रुद्धो म्रियतां हन्यतामिति । वाचस्य ब्रुवतस्तस्य श्रुत्वा प्राद्युम्निराहवे ।
वाणस्य वदनं क्रोधाद्दृसमानोऽभ्युदैक्षत । ऊषा भयपरित्रस्ता रुदते तत्र भाविनी ।
अनिरुद्धः प्रहस्याथ समाश्वास्य च तां स्थितः । अथ वाणः शरौघाणि क्षुद्रकाणां समन्ततः ।
चिक्षेप समरे क्रुद्धो ह्यनिरुद्धवधेप्सया । अनिरुद्धस्तु चिच्छेद काङ्क्षंस्तस्य पराजयं ।
ववर्ष शरवर्षाणि क्षुद्रकाणां समन्ततः । वाणोऽनिरुद्धशिरसि काङ्क्षंस्तस्य रणे वधं । ११०७५
तानि वाणसहस्राणि चर्म्मणा व्यवधूय सः । बभौ प्रमुखतस्तस्य स्थितः सूर्य्य इवोदये ।
सोऽभिभूय रणे वाणमास्थितो यदुनन्दनः । सिंहः प्रमुखतो दृष्ट्वा गजमेकं यथा वने ।
ततो वाणसहस्रौघैर्म्मर्म्मभेदिभिराशुगैः । विव्याध निशितैस्तीक्ष्णैः प्राद्युम्निमपराजितं ।
समाहतस्ततो वाणैः खड्गचर्म्मधरोऽपतत् । तमापतन्तं निशितैरभ्यघ्नन् सायकैस्तदा ।
सोऽतिविद्धो महाबाहुर्व्वाणैः सन्नतपर्व्वभिः । क्रोधेनाति प्रजज्वाल चिकीर्षुः कर्म्म दुष्करं । ११०८०
रुधिरौघप्लुतैर्गात्रैर्व्वाणवेधैः समाहतः । अभिभूतः सुसंक्रुद्धो ययौ वाणरथम्प्रति ।
असिभिर्म्मुषलैः शूलैः पट्टिशैस्तोमरैस्तथा । सोऽतिविद्धः शरौघैस्तु प्राद्युम्निर्नाभ्यकम्पत ।
आप्लुत्य सहसा क्रुद्धो रथेषां तस्य सोऽच्छिनत् । जघानाश्वान् स खड्गेन वाणस्य रणमूर्द्धनि ।
तं पुनः शरवर्षेण तोमरैः पट्टिशैस्तथा । चकारान्तर्हितं वाणो युद्धमार्गविशारदः ।
हतोऽयमिति विज्ञाय प्राणदन्दानवा रणे । ततोऽवप्लुत्य सहसा रथपार्श्वे व्यवस्थितः । ११०८५
शक्तिं वाणस्ततः क्रुद्धो घोररूपां भयावहां । जग्राह ज्वलितां दीप्तां घण्टामालाकुलां रणे ।
ज्वलनादित्यसङ्काशां यमदण्डोग्रदर्शनां । प्राहिणोत्तामसङ्गेन महोल्कां ज्वलितामिव ।
तामापतन्तीं सम्प्रेक्ष्य जीवितान्तकरीन्तदा । सोऽभिप्लुत्य तदा शक्तिं जग्राह पुरुषोत्तमः ।
निर्ब्बिभेद तदा वाणं तया शक्त्या महाबलः । सा भित्त्वा तस्य देहं तु जगाम वसुधातलं ।
स गाढविद्धो व्यथितो ध्वजयष्टिं समाश्रितः । ततो मूर्च्छाभिभूतं तं कुम्भाण्डो वाक्यमब्रवीत् । ११०९०
उपेक्षसे दानवेन्द्र किमेवं शत्रुमुद्यतं । लब्धलक्षो ह्ययं वीरो निर्व्विकारोऽद्य दृश्यते ।
मायामाश्रित्य युध्यस्व नायं वध्योऽन्यथा भवेत् । आत्मानं माञ्च रक्षस्व प्रमादात् किमुपेक्षसे ।
वध्यतामयमद्यैव न नः सर्व्वान्विनाशयेत् । कुम्भाण्डवचनैरेवं दानवेन्द्रः प्रचोदितः ।
वाचं रुषामभिक्रुद्धः प्रोवाच वदताम्बरः । एषोऽहमस्य विदधे मृत्युं प्राणहरं रणे ।

आदास्याम्यहमेतं हि गरुत्मानिव पन्नगान्। इत्येवमुक्ता स रथः साश्वः सध्वजसारथिः। १०१९५
गन्धर्व्वनगराकारस्तत्रैवान्तरधीयत। विज्ञायान्तर्हितं वाणं प्राद्युम्निरपराजितः।
पौरुषेण समायुक्तः संप्रैक्षत दिशो दश। आस्थाय तामसीं विद्यां ततः क्रुद्धो बलेः सुतः।
मुमोच निशितान् वाणांश्छन्नो मायाधरो बली। प्राद्युम्निर्विशिखैर्व्विद्धः सर्पभूतैः समन्ततः।
वेष्टितो बहुधा तस्य देहः पन्नगराशिभिः। स तु वेष्टितसर्व्वाङ्गो बद्धः प्राद्युम्निराहवे।
निष्प्रयत्नःकृतस्तस्थौ मैनाक इव पर्व्वतः। ज्वालावलीढवदनैः सर्पभोगैर्विचेष्टितः। १०२००
अभीतः पर्व्वताकारः प्राद्युम्निरभवद्रणे। निष्प्रयत्नगतिश्चापि सर्पवक्त्रमयैः शरैः।
न विव्यथे स भूतात्मा सर्व्वतः परिवेष्टितः। ततस्तं वाग्भिरुग्राभिः संरब्धः समतर्ज्जयत्।
वाणो ध्वजं समाश्रित्य प्रोवाचामर्षितो वचः। कुम्भाण्ड वध्यतां शीघ्रमयं वै कुलपांसनः।
चारित्रं येन नो लोके दूषितं दूषितात्मना। इत्येवमुक्ते वचने कुम्भाण्डो वाक्यमब्रवीत्।
राजन् वक्ष्याम्यहं किञ्चित् तन्मे शृणु यदीच्छसि। अयं विज्ञायतां कस्य कुतो वाऽयमिहागतः। १०२०५
केन वायमिहानीतः शक्रतुल्यपराक्रमः। मयाऽयं बहुशो युध्यन् दृष्टो राजन्महारणे।
क्रीडन्निव च युद्धेषु दृश्यते देवसूनुवत्। बलवान् सत्त्वसम्पन्नः सर्व्वशस्त्रविशारदः।
नायं वधकृतं दोषमर्हेद्दै दैत्यसत्तम। गान्धर्व्वेण विवाहेन कन्येयं तव सङ्गता।
अदेया ह्यप्रतिग्राह्या अतश्चिन्त्य वधं कुरु। विज्ञाय तु वधं वाऽस्य पूजां वाऽस्य करिष्यसि।
वधे ह्यस्य महान्दोषो रक्षणे सुमहान् गुणः। अयं हि पुरुषोत्कर्षः सर्व्वथा मानमर्हति। १०२१०
सर्व्वतो वेष्टिततनुर्न व्यथत्येष भोगिभिः। कुलशौटीर्य्यवीर्य्यैश्च सत्त्वेन च समन्वितः।
पश्य राजन् यशोवीर्य्यैरन्वितं पुरुषोत्तमं। न नो गणयते सर्व्वान् वधं प्राप्तोऽप्ययं बली।
यदि मायाप्रभावेण नाथ बद्धो भवेदयं। सर्व्वासुरगणान् सङ्ख्ये योधयेन्नात्र संशयः।
सर्व्वयुद्धेषु मार्गज्ञो भवेद्वीर्य्याधिकस्तव। शोणितौघप्लुतैर्गात्रैर्नागभोगैश्च वेष्टितः।
त्रिशिखां भ्रुकुटीं कृत्वा न चिन्तयति नः स्थितान्। इमामवस्थां नीतोऽपि स्वशाखबलमाश्रितः। १०२१५
न चिन्तयति राजंस्त्वां वीर्य्यवान् कोऽप्ययं युवा। सहस्रबाहोः समरे द्विबाहुः प्रमुखे स्थितः।
न चिन्तयति ते वीर श्रेयो वीर्य्यबलान्वितः। रुचितं यदि ते राजन् श्रेयो वीर्य्यबलान्वितः।
कन्या चेयं न चान्यस्य निर्यात्यानेन सङ्गता। यदि चेष्टतमः कश्चिदयं वंशे महात्मनां।
ततः पूजामयं लब्ध्वा प्राप्स्यत्येवासुरोत्तम। रक्ष्यतामिति चोक्ता वै तथाऽस्त्विति च तस्थिवान्।
एवमुक्ते तु वचने कुम्भाण्डेन महात्मना। तथेत्याह तु कुम्भाण्डं वाणः शक्रनिवर्हणः। १०२२०
संरक्षिणस्ततो दत्त्वा ह्यनिरुद्धस्य धीमतः। ययौ स्वमेव भवनं बलेः पुत्रो महाबलः।
संयतं मायया दृष्ट्वा अनिरुद्धं महाबलं। ऋषीणां नारदः श्रेष्ठोऽव्रजद्द्वारवतीं प्रति।
ततो ह्याकाशमार्गेण मुनिर्द्वारवतीङ्गतः। बद्धं निवेदयामीति प्राद्युम्निं गरुडध्वजे।
गते ऋषीणां प्रवरे सोऽनिरुद्धो व्यचिन्तयत्। नष्टोऽयं दानवः क्रूरो युद्धं प्राप्य न संशयः।

स गत्वा नारदस्तत्र शङ्खचक्रगदाधरं । ज्ञापयिष्यति तत्त्वेन इममर्थं यथैव तत्। १०२२५
नागैर्व्विवेष्टितं दृष्ट्वा ऊषा प्राद्युम्निमातुरा । रुरोद वाष्परक्ताक्षी तामाह रुदतीं पुनः ।
किमिदं रुद्यते भीरु मा भैस्त्वं शुभलोचने । पश्य सुश्रोणि सम्प्राप्तं मत्कृते मधुसूदनं ।
यस्य शङ्खध्वनिं श्रुत्वा वाङ्गशब्दं बलस्य च । दानवा नाशमेष्यन्ति गर्भाश्चासुरयोषितां ।
॥ वैशम्पायन उवाच ॥ एवमुक्ताऽनिरुद्धेन ऊषा विस्रम्भमागता । नृशंसं पितरञ्चैव शोचते सा सुमध्यमा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि वाणयुद्धे अनिरुद्धबन्धने सप्तसप्तत्यधिकशतोऽध्यायः ॥ १७७ ॥
॥ वैशम्पायन उवाच ॥ यदा वाणपुरे वीरः सोऽनिरुद्धः सहोषया । सन्निरुद्धोऽसुरेन्द्रेण वाणेन बलिसूनुना । १०२३०
तदा देवीं स कौमारीं रक्षार्थं शरणं गतः । यद्गीतमनिरुद्धेन देव्याः स्तोत्रमिदं शृणु ।
अनन्तमक्षयं दिव्यमादिदेवं सनातनं । नारायणं नमस्कृत्य प्रवरं प्रथमं विभुं ।
चण्डीं कात्यायनीं देवीमार्य्यां लोकनमस्कृतां । वरदां कीर्त्तयिष्यामि नामभिर्हरिसंस्तुतैः ।
ऋषिभिर्द्दैवतैश्चैव वाक्पुष्पैरर्च्चितां शुभां । तां देवीं सर्व्वदेहस्थां सर्व्वलोकनमस्कृतां ।
॥ अनिरुद्ध उवाच ॥ महेन्द्रविष्णुभगिनीं नमाम्यात्महिताय वै । मनसा भावशुद्धेन शुचिः स्तोष्ये कृताञ्जलिः । १०२३५
गौतमीं कंसभयदां यशोदानन्दिवर्द्धिनीं । मेध्यां गोकुलसम्भूतां नन्दगोपस्य नन्दिनीं ।
प्राज्ञां दक्षां शिवां पुण्यां दनुपुत्त्रप्रमर्द्दिनीं । तां देवीं सर्व्वदेहस्थां सर्व्वभूतनमस्कृतां ।
दर्शनीं पूरणीं मायां शशिवक्त्रां शशिप्रभां । शान्तिं भुशाञ्च जननीम्मोहनीं तोषणीं तथा ।
स्तव्यां देवैः सर्षिगणैः सर्व्वभूतनमस्कृतां । कालीं कात्यायनीं देवीं भयदां भयनाशिनीं ।
कात्यायनीं कामगमां त्रिनेत्रां ब्रह्मचारिणीं । सौदामिनीं मेघरवां वेतालीं विपुलाननां । १०२४०
यूथस्थाम्बां महाभागां शकुनीं रेवतीं तथा । तिथीनां पञ्चमीं षष्ठीं पौर्णमासीं चतुर्द्दशीं ।
सप्तविंशति ऋक्षाणि नद्यः सर्व्वा दिशो दश । नगरोपवनोद्यानचत्याट्टालनवासिनीं ।
ह्रीं श्रीं गार्गीञ्च गान्धर्व्वीं योगिनीं योगदां सदा । कीर्त्तिनाशां दिशं स्पर्शां नमस्यामि सरस्वतीं ।
वेदानां मातरञ्चैव सावित्रीं भक्तवत्सलां । तपस्विनीं शान्तिकरीमेकानंशां सनातनीं ।
कौटीर्थ्यां मदिरां चण्डामिलां मलयवासिनीं । भूतधात्रीं भयकरीं कुष्माण्डीं कुसुमप्रियां । १०२४५
दारुणीं मन्दरावासां विन्ध्यकैलासवासिनीं । वराङ्गनां सिंहरथां बहुरूपां वृषध्वजां ।
दुर्लभां दुर्ज्जयां दुर्गां निशुम्भभयदर्शिनीं । सुराप्रियां सुरां देवीं वज्रगाण्डनुजां शिवां ।
किरातीञ्चीरवसनां चौरसेनानमस्कृतां । आज्यपां सोमपां सौम्यां सर्व्वपर्व्वतवासिनीं ।
निशुम्भशुम्भमथनीं गजकुम्भोपमस्तनीं । जननीं सिद्धसेनस्य सिद्धचारणसेवितां ।
वरां कुमारप्रभवां पार्व्वतीं पर्व्वतात्मजां । पञ्चाशद्देवकन्यानां पत्न्यो देवगणस्य च । १०२५०
कद्रुपुत्त्रसहस्रस्य पुत्त्रपौत्त्रवरस्त्रियः । माता पिता जगन्मान्या दिवि देवाप्सरोगणैः ।
ऋषिपत्नीगणानाञ्च यक्षगन्धर्व्वसेविता । विद्याधराणां नारीषु साध्वीसु मनुजासु च ।
एवमेतासु नारीषु सर्व्वभूताश्रया ह्यसि । नमस्कृताऽसि त्रैलोक्ये किन्नरोद्गीतसेविते ।

अचिन्त्या ह्यप्रमेयाऽसि याऽसि साऽसि नमोऽस्तु ते। एभिर्नामभिरन्यैश्च कीर्त्तिता ह्यसि गौतमि।
त्वत्प्रसादादविघ्नेन क्षिप्रं मुच्येय बन्धनात्। अवेक्षस्व विशालाक्षि पादौ ते शरणं व्रजे। १०२५५
सर्व्वेषामेव बद्धानां मोक्षणं कर्त्तुमर्हसि। ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्य्याग्निमारुताः।
अश्विनौ वसवश्चैव विश्वे साध्यास्तथैव च। मरुतः सह पर्ज्जन्या धाता भूर्निर्द्दिशो दश।
गावो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तथा। सरितः सागराश्चैव नानाविद्याधराः खगाः।
तथा नागाः सुपर्णाश्च गन्धर्व्वाप्सरसां गणाः। कृत्स्नं जगदिदं प्रोक्तं देव्या नामानुकीर्त्तनात्।
देव्यास्तवमिदं पुण्यं यः पठेत्सुसमाहितः। सा तस्मै सप्तमे मासि वरमग्र्यं प्रयच्छति। १०२६०
अष्टादशभुजा देवी दिव्याभरणभूषिता। हारभूषितसर्व्वाङ्गी मुकुटोज्ज्वलभूषणा।
कात्यायनि स्तूयसे त्वं वरदे वामलोचने। नमोऽस्तु ते महादेवि सुप्रीता वै भजस्व मां।
प्रयच्छस्व वरं ह्यायुः पुष्टिश्चैव चलां धृतिं।
॥ वैशम्पायन उवाच ॥ एवं स्तुता महादेवी दुर्गा दुर्गपराक्रमा। सान्निध्यं कल्पयामास अनिरुद्धस्य बन्धने।
अनिरुद्धहितार्थाय देवी शरणवत्सला। बद्धं वाणपुरे वीरमनिरुद्धं ह्यमोचयत्। १०२६५
सान्त्वयामास तं वीरमनिरुद्धममर्षणं। प्रसादं दर्शयामास अनिरुद्धस्य बन्धने।
पूजयामास तां वीरः सोऽनिरुद्धः प्रतापवान्। नागपाशेन बद्धस्य तस्योषाहृतचेतसः।
स्फोटयित्वा कराग्रेण पञ्जरं वज्रसन्निभं। बद्धं वाणपुरे वीरं साऽनिरुद्धमभाषत।
सान्त्वयन्ती वचो देवी प्रसादाभिमुखी तदा।
॥ देव्युवाच ॥ चक्रायुधो मोचयिताऽनिरुद्ध त्वां बन्धनादाशु सहस्व कालं। छित्त्वा तु वाणस्य स बाहुवनं पुरीं निशां नेष्यति दैत्यसूदनः। १०२७०
॥ वैशम्पायन उवाच ॥ यदाऽनिरुद्धं सह वाणपुत्र्या नेतुं खगेन्द्रेण हरिः प्रवृत्तः। महासुरे बाण उदीर्णचक्रे न्यक्कारमासन्नतरं निशम्य।
ततोऽनिरुद्धः पुनरेव देवीं तुष्टाव हृष्टा शशिकान्तवक्त्रः।
॥ अनिरुद्ध उवाच ॥ नमोऽस्तु ते देवि वरप्रदे शिवे नमोऽस्तु ते देवि सुरारिनाशिनि। नमोऽस्तु ते कामचरे सदाशिवे नमोऽस्तु ते सर्व्वहितैषिणि प्रिये।
नमोऽस्तु ते महिषमहासुरार्द्दिनि नमोऽस्तु ते भयकरि विद्विषां सदा।
ब्रह्माणीन्द्राणि रुद्राणि भूतभव्ये यशस्विनि। त्राहि मां सर्व्वदुःखेभ्यो नारायणि नमोऽस्तु ते। १०२७५
नमोऽस्तु ते जगन्नाथे प्रिये दान्ते महाव्रते। प्रियभक्ते जगन्मातः शैलपुत्रि वसुन्धरे।
त्रायस्व मां विशालाक्षि नारायणि नमोऽस्तु ते। नमामि शिरसा देवीं बन्धनस्थो विमोक्षितः।
रक्ष मां सर्व्वभूतेभ्यो नारायणि नमोऽस्तु ते। त्रायस्व सर्व्वदुःखेभ्यो दानवानाञ्च शङ्करि।
रुद्रप्रिये महाभागे भक्तानामार्त्तिनाशिनि। सर्व्वदुःखभयत्रासात्त्राहि मां परमेश्वरि।

॥ वैशम्पायन उवाच ॥ आर्य्यास्तवमिदं पुण्यं यः पठेत् सुसमाहितः । सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति । १०२८३

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बाणयुद्धे अनिरुद्धकृतार्य्यास्तवे अष्टसप्तत्यधिकशततोऽध्यायः ॥ १७८ ॥

॥ वैशम्पायन उवाच ॥ ततोऽनिरुद्धस्य गृहे रुरुदुः सर्व्वयोषितः । प्रियं नाथमपश्यन्त्यः कुरर्य्य इव संघशः ।

अहो धिक् किमिदं नाथ नाथे कृष्णे व्यवस्थिते । अनाथा इव संत्रस्ता रुदिमो भयपीडिताः ।

यस्येन्द्रप्रमुखा देवाः सादित्याः समरुद्गणाः । बाहुच्छायां समाश्रित्य वसन्ति दिवि निर्वृताः ।

तस्योत्पन्नमिदं लोके भयदस्य महद्भयं । यस्यानिरुद्धः पौत्त्रः स वीरः केनापि नो हृतः ।

अहो नास्ति भयं नूनं तस्य लोके सुदुर्मतेः । वासुदेवस्य यः क्रोधं प्रज्वालयति दुःसहं । १०२८५

व्यादितास्यस्य यो मृत्योर्दंष्ट्राग्रे परिवर्त्तते । स वासुदेवं समरे मोहन् प्रत्युदियाद्रिपुः ।

इदमेवंविधं कृत्वा विप्रियं यदुपुङ्गवे । कथं जीवन् विमुच्येत साक्षादपि शचीपतिः ।

हतनाथाः स्म शोच्याः स्म वयमद्य विनाकृताः । विप्रयोगेण नाथस्य कृतान्तवशगाः कृताः ।

इत्येवं ता रुदन्त्यश्च वदन्त्यश्च पुनः पुनः । नेत्रजं वारि मुमुचुरशिवं परमाङ्गनाः ।

तासां वाष्पाम्बुपूर्णाणि नयनानि चकाशिरे । सलिलेनाप्लुतानीव पङ्कजानि जलागमे । १०२९०

तासामरालपक्ष्माणि राजिमन्ति शुभानि च । रुधिरेणाप्लुतानीव नयनानि चकाशिरे ।

तासां हर्म्यतलस्थानां तूर्णमासीन्महास्वनः । कुररीणामिवाकाशे रुदतीनां सहस्रशः ।

तं श्रुत्वा निनदं घोरमपूर्व्वं भयमागतं । उत्पेतुः सहसा स्वेभ्यो गृहेभ्यः पुरुषर्षभाः ।

कस्मादेषोऽनिरुद्धस्य श्रूयते रुदितस्वनः । गृहे कृष्णाभिगुप्तानां कुतो नो भयमागतं ।

इत्येवमूचुस्तेऽन्योन्यं स्नेहविक्लवगद्गदाः । आधर्षिता यथा सिंहा गुहाभ्य इव निःसृताः । १०२९५

सन्नाहभेरी कृष्णस्य सभायामाहता तदा । तस्याः शब्देन ते सर्व्वे सभामागम्य धिष्ठिताः ।

किमेतदिति तेऽन्योन्यं समपृच्छन्त यादवाः । अन्योन्यस्य हि ते सर्व्वे यथान्यायमवेदयन् ।

ततस्ते वाष्पपूर्णाक्षाः क्रोधसंरक्तलोचनाः । निश्वसन्तो व्यतिष्ठन्त यादवा युद्धदुर्म्मदाः ।

तूष्णीम्भूतेषु सर्व्वेषु विपृथुर्व्वाक्यमब्रवीत् । कृष्णं प्रहरतां श्रेष्ठं निश्वसन्तं मुहुर्मुहुः ।

किमेवं चिन्तयाविष्टः पुरुषेन्द्र भवानिह । तव बाहुबलप्राणमाश्रिताः सर्व्वयादवाः । १०३००

भवन्तमाश्रिताः कृष्ण संविभक्ताश्च सर्व्वशः । तथैव भगवान् शक्रस्त्वय्यावेश्य जयाजयौ ।

सुखं स्वपिति निश्चिन्तः कथं त्वं चिन्तयाऽन्वितः । शोकसागरमक्षोभ्यं सर्व्वे ते ज्ञातयो गताः ।

तान्मज्जमानानेकस्त्वं समुद्धर महाभुज । किमेवं चिन्तयाविष्टो न किञ्चिदभिभाषसे ।

चिन्तां कर्त्तुं वृथा देव न त्वमर्हसि माधव । इत्येवमुक्तः कृष्णस्तु निःश्वस्य सुचिरं बहु ।

प्राह वाक्यं स वाक्यज्ञो बृहस्पतिरिव स्वयं । १०३०५

॥ कृष्ण उवाच ॥ विपृथो चिन्तयाविष्ट एतत् कार्य्यमचिन्त्यं । विचिन्तयंस्त्वहञ्चास्य कार्य्यस्य न लभे गतिं ।

तथाऽहं भवताऽप्युक्तो नोत्तरं विदधे क्वचित् । दाशार्हगणमध्येऽहं वदाम्यर्थवतीं गिरं ।

शृणुध्वं यादवाः सर्व्वे यथा चिन्तान्वितो ह्यहं। अनिरुद्धे हृते शूरे पृथिव्यां सर्व्वपार्थिवाः।
अशक्ता इव मंस्यन्ते सर्व्वानस्मान् सबान्धवान्। आहुकश्चैव नो राजा हृतः शाल्वेन वै पुरा।
प्रत्यानीतः स चास्माभिर्युद्धं कृत्वा सुदारुणं। प्रद्युम्नश्चापि नो बाल्ये शम्बरेण हृतो ह्यभूत्। १०२१०
स तं निहत्य समरे प्राप्तो रुक्मिणिनन्दनः। इदन्तु सुमहत् कष्टं प्राद्युम्निः क्व प्रवासितः।
नैवंविधमहं दोषं स्मरामि मनुजर्षभाः। भस्मना गुण्ठितः पादो येन मे मूर्द्ध्नि पातितः।
तस्याहं सानुबन्धस्य हरिष्ये जीवितं रणे। इत्येवमुक्ते कृष्णेन सात्यकिर्व्वाक्यमब्रवीत्।
चराः कृष्ण प्रयुज्यन्तामनिरुद्धस्य मार्गणे। सपर्व्वतवनोद्देशां मार्गन्तु वसुधामिमां।
आहुकं प्राह कृष्णस्तु स्मितं कृत्वा वचस्तदा। अन्वेषणेऽनिरुद्धस्य चरानादिश मा चिरं। १०२१५
आभ्यन्तराश्च वाह्याश्च व्यादिश्यन्तां चरा नृप।
॥ वैशम्पायन उवाच ॥ केशवस्य वचः श्रुत्वा आहुकस्त्वरितोऽभवत्। अन्वेषणेऽनिरुद्धस्य चरान् व्यादिष्टवांस्तदा।
ततश्चराश्च व्यादिष्टाः पार्थिवेन यशस्विना। हया रथाश्च व्यादिष्टाः पार्थिवेन महात्मना।
अभ्यन्तरश्च मार्गध्वं वाह्यतश्च समन्ततः। वेणुमन्तं लतावेष्टं तथा रैवतकं गिरिं।
ऋक्षवन्तं गिरिञ्चैव मार्गध्वं त्वरिता हयैः। एकैकं तत्र योधानां मार्गितव्यं समन्ततः। १०२२०
यातव्यञ्चापि निःशङ्कमुद्यानेषु समन्ततः। हयानाञ्च सहस्राणि रथानाञ्चाप्यनेकशः।
आरुह्य त्वरिताः सर्व्वे मार्गध्वं यदुनन्दनं। सेनापतिरनाधृष्टिरिदं वचनमब्रवीत्।
कृष्णमक्लिष्टकर्म्माणमच्युतं भीतभीतवत्। शृणु कृष्ण वचो मह्यं यदि ते रोचते प्रभो।
चिरात् प्रभृति मे वक्तुं भवन्तं जायते मतिः। अयिलोमा पुलोमा च निसुन्दनरकौ हतौ।
भौमः शाल्वश्च निहतो मैन्दो द्विविद एव च। हयग्रीवश्च सुमहान् सानुबन्धस्त्वया हतः। १०२२५
तादृशे विग्रहे वृत्ते देवदैत्योः सुदारुणे। सर्व्वाण्येतानि कर्म्माणि निःशेषाणि रणे रणे।
कृतवानसि गोविन्द पार्ष्णिग्राहस्य नास्ति ते। इदं कर्म्म त्वया कृष्ण सानुबन्धं कृतं रणे।
पारिजातस्य हरणे यत् कृतं कर्म्म दुष्करं। तच्च शक्रस्त्वया कृष्ण ऐरावतशिरोगतः।
निर्ज्जितो बाहुवीर्य्येण स्वयं युद्धविशारदः। तेन वैरं त्वया सार्द्धं कर्त्तव्यं नात्र संशयः।
वैरानुबन्धस्य महांस्तेन कार्य्यस्त्वया सह। तथानिरुद्धहरणं कृतं मघवता स्वयं। १०२३०
न ह्यन्यस्य भवच्छक्तिर्व्वैरनिर्य्यातनम्प्रति। इत्येवमुक्ते वचने कृष्णो नाग इव श्वसन्।
उवाच वचनं धीमाननाधृष्टिं महाबलं। सेनानीस्तात मा मैवं न देवाः क्षुद्रकर्म्मिणः।
नाकृतज्ञा न च क्लीवा नावलिप्ता न बालिशाः। देवतार्थञ्च मे यत्नो महान्दानवसंक्षये।
तेषां प्रियार्थञ्च रणे हन्मि दृप्तान्महासुरान्। तत्परस्तन्मनाश्चास्मि तद्भक्तस्तत्परायणः।
कथं पापं करिष्यन्ति विज्ञायैवंविधं हि मां। अक्षुद्राः सत्यवन्तश्च नित्यं भक्तानुकम्पिनः। १०२३५
न तेभ्यो विद्यते पापं बालिशत्वात् प्रभाषसे। कदाचिदिह पौंश्चल्यादनिरुद्धो हृतो भवेत्।
देवेषु समहेन्द्रेषु नैतत् कर्म्म विधीयते।

ऊषा नाम सुता तस्य बाणस्याप्रतिमौजसः । तदर्थं चित्रलेखा वै जहाराशु तमप्सराः ।
उभयोरपि तत्रासीन्महद्युद्धं सुदारुणं । प्राद्युम्निबाणयोः सङ्ख्ये बलिवासवयोरिव ।
अस्माभिश्चापि तद्युद्धं दृष्टं सुमहदद्भुतं । अनिरुद्धो भयात्तेन संयुगेष्वनिवर्त्तिना । १०१७०
बाणेन मायामास्थाय बद्धो नागैर्महाबलः । आदिष्टश्च वधस्तस्य बाणेन गरुडध्वज ।
तन्निवारितवान्मन्त्री कुम्भाण्डो नाम तस्य च । कुमारस्यानिरुद्धस्य तेनाश्चर्येण संयुगे ।
बाणेन मायामास्थाय सर्पैर्नियमनं कृतं । उत्तिष्ठतु भवान् शीघ्रं यशसे विजयाय च ।
नायं संरचितुं कालः प्राणांस्तात अपेक्षितां । प्राणैः किञ्चिद्धि तैर्व्वीरो धैर्य्यमालम्ब्य तिष्ठति ।
॥ वैशम्पायन उवाच ॥ इत्येवमुक्ते वचने वासुदेवः प्रतापवान् । प्रायाणिकान् वै संभारानाज्ञापयत वीर्य्यवान् । १०१७५
ततश्चन्दनचूर्णैश्च लाजैश्चापि समन्ततः । विनिर्ययौ महाबाहुः कीर्य्यमाणो जनार्द्दनः ।
॥ नारद उवाच ॥ स्मरणं वैनतेयस्य कृष्ण त्वं कर्त्तुमर्हसि । न ह्यन्येन तदध्वा वै शक्यो गन्तुं महाभुज ।
श्रूयताञ्च तदध्वानं गन्तव्यमतिदुर्ज्जयं । एकादशसहस्राणि योजनानां जनार्द्दन ।
तदितः शोणितपुरं प्राद्युम्निर्यत्र साम्प्रतं । मनोजवो महावीर्य्यो वैनतेयः प्रतापवान् ।
एकेन स मुहूर्त्तेन बाणं संदर्शयिष्यति । तमाह्वयस्व गोविन्द सहि त्वां तत्र नेष्यति । १०१८०
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा प्राध्यायत् गरुडं हरिः । स कृष्णपार्श्वमागम्य प्राञ्जलिर्गरुडः स्थितः ।
प्रणम्याथ वचः प्राह वैनतेयो महाबलः । वासुदेवं महात्मानं श्लक्ष्णं मधुरया गिरा ।
॥ गरुड उवाच ॥ पद्मनाभ महाबाहो किमर्थं चिन्तितो ह्यहं । कार्य्यं ते यदि तत्राखिलं श्रोतुमिच्छामि तत्त्वतः ।
कस्य पक्षपरिक्षेपैर्नाशयामि पुरं विभो । प्रभावात्तव गोविन्द को न विद्यात् बलं मम ।
गदावेगश्च ते वीर चक्राग्निश्च महाभुज । नावबुध्यति मूढात्मा को दर्पान्नाशमेष्यति । १०१८५
हलं सिंहमुखं कस्य वनमाली निधोक्ष्यति । कस्य देहं तु निर्भिन्नं मेदिनीं यास्यति प्रभो ।
कस्य शङ्खरवैः प्राणान्मोहयिष्यसि माधव । कोऽयं सपरिवारोऽद्य यास्यते यमसादनं ।
एवमुक्ते तु वचने वैनतेयेन धीमता । वासुदेवो वचः प्राह शृणुष्व पततां वर ।
बलेः पुत्त्रेण बाणेन प्राद्युम्निरपराजितः । ऊषायाः कारणे बद्धो नगरे शोणिताह्वये ।
अनिरुद्धस्तु कामार्त्तो बद्धो नागैर्महाविषैः । तस्य मोक्षार्थमाहूतो मया त्वं पतगेश्वर । १०१९०
तव वेगे समो नास्ति पक्षिणाम्प्रवरो भवान् । अशक्यश्च तदध्वानं गन्तुमन्येन वै प्रभो ।
तत्र प्रापय शीघ्रं मां यत्र प्राद्युम्निराबसत् । वैदर्भी ते स्नुषा वीर रुदते पुत्त्रगृद्धिनी ।
त्वत्प्रसादाद्भवत्येषा पुत्त्रेण सह सङ्गता । अद्भुतं हि कृतं पूर्व्वं त्वया पन्नगनाशन ।
मया सह समागम्य तस्मिन् काले महाभुज । आत्मा मे त्वं ध्वजश्चैव सङ्ग्रामेषु महाबल ।
सखित्वं मानयस्वाद्य भक्तिश्च पतगेश्वर । तव वेगसमो नास्ति पक्षिष्वाद्य न ते समः । १०१९५
सुपर्ण मुक्तेन त्वां शपे पन्नगनाशन । दासीभावात्त्वया माता मोक्षितैकाकिना पुरा ।
पक्षविक्षेपमात्रेण जिता देवास्त्वया रणे । भवान् सुरगणान् सर्व्वान् पृष्ठमारोप्य विक्रमात् ।

गच्छ मे स्वगमान् देशान् विजयस्व तवाश्रयात् । गुरुत्वान्मेरुतुल्यस्त्वं लघुत्वात् पवनोपमः ।
भूते भव्ये भविष्ये च न ते तुल्योऽस्ति विक्रमे । सत्यसन्ध महाभाग वैनतेय महाद्युते ।
चणमद्यानुरुद्धार्थं साहाय्यमुपकल्प्यतां । १०४००
॥ गरुड उवाच ॥ अत्यद्भुतमिदं वाक्यं तव कृष्ण महाभुज । त्वत्प्रसादात्तु विजयः सर्व्वत्र मम केशव ।
धन्योऽस्म्यनुगृहीतोऽस्मि संस्तवान्मधुसूदन । श्रोतव्यस्त्वं मया कृष्ण स्तौषि मां त्वं महाभुज ।
वेदाध्यक्षः सुराध्यक्षः सर्व्वकामप्रदो भवान् । अमोघदर्शनस्त्वं हि वरार्थिषु वरप्रदः ।
चतुर्भुजश्चतुर्मूर्त्तिश्चातुर्होत्रप्रवर्त्तकः । चातुराश्रम्यवेत्ता च चतुर्होता महाकविः ।
धनुर्धरश्चक्रधरो भवान् शङ्खधरो महान् । भवान् पूर्व्वेषु देहेषु ख्यातो भूमिधरः प्रभो । १०४०५
लाङ्गली मुषली चक्री देवकीतनयो भवान् । गोवर्द्धनधरश्चैव गोप्रियः कंसहा भवान् ।
चानूरमथनश्चैव मल्लादिर्मल्लभावनः । मल्लप्रियो महामल्लो महापुरुषइत्यपि ।
विप्रप्रियो विप्रहितो विप्रश्रो विप्रभावनः । ब्रह्मण्यश्च वरेण्यश्च महान्दामोदरः स्मृतः ।
प्रलम्बमथनश्चैव केशिहा दानवान्तकः । अरिष्टघ्नस्य हन्ता वै तथा रावणनाशनः ।
विभीषणस्य भगवान्राज्यदो वालिनाशनः । सुग्रीवराज्यदाता च वलिराज्यापहारकः । १०४१०
रत्नहर्त्ता महारत्नः समुद्रोदरसम्भवः । वरुणश्च भवान् ख्यातो भवांश्च सरिदुद्भवः ।
भवान् खड्गधरो धन्वी धनुर्द्धरवरो महान् । दाशार्ह इति विख्यातो महाधन्वा धनुःप्रियः ।
गोविन्द इति विख्यातो जलधिस्त्वञ्च सुव्रत । आकाशञ्च तमश्चैव समुद्रमथनो महान् ।
भवान् स्वर्गो बहुफलो भवान् स्वर्गधरो मही । त्वमेव च महामेघो वीजनिष्पत्तिरेव च ।
त्रैलोक्यमथनश्चैव क्रोधलोभमनोरथः । भवान् कामप्रदश्चैव कामः सर्व्वधनुर्द्धरः । १०४१५
सम्वर्त्तो वर्त्तनश्चैव प्रलयो निलयो महान् । हिरण्यगर्भो भूगर्भो रूपवान् पुरुषोत्तमः ।
ईशस्त्वं च महादेवस्त्वमसङ्ख्यगुणान्वितः । स्तोतुमिच्छसि मां देवस्तोतव्यस्त्वं सनातनः ।
चक्षुषा ये त्वया घोराः प्राणिनश्च निरीक्षिताः । हतास्ते यमदण्डेन तिर्य्यङ्निरयगामिनः
ये त्वया परमप्रीत्या प्राणिनो वै निरीक्षिताः । इह च प्रेत्य ते सर्व्वे सर्व्वथा स्वर्गगामिनः ।
एष तेऽहं महाबाहो वशगः शासने स्थितः । जयशब्दं ततः कृत्वा गरुडः प्राह केशवं । १०४२०
अयमस्मि स्थितो वीर आरुहस्व महाबल । स कृष्णपार्श्वमागम्य हर्षादेव स्थितोऽभवत् ।
प्राह कण्ठे परिष्वज्य माधवो गरुडं ततः । सखे शत्रुविनाशाय अर्घोऽयं प्रतिगृह्यतां ।
दत्वार्घ्यं परया प्रीत्या शङ्खचक्रगदासिभृत् । आरुरोह महाबाहुः सुपर्णं पुरुषोत्तमः ।
कृष्णाकेशस्य बलवान् जिष्णुः कृष्णस्य वल्लभः । चतुर्द्दंष्ट्रश्चतुर्ब्बाहुश्चतुर्व्वेदः षडङ्गवित् ।
श्रीवत्साङ्कोऽरविन्दाक्ष ऊर्द्ध्वरोमा मृदुत्वचः । समाङ्गुलिः समनखो रक्ताङ्गुलिनखान्तरः । १०२२५
स्निग्धगम्भीरनिर्घोषो वृत्तबाहुर्महाभुजः । आजानुबाहुस्ताम्रास्यः सिंहविस्पष्टविक्रमः ।
सहस्रमिव सूर्य्याणां दीप्यमानः प्रकाशते । यः प्रभुर्भाति भूतात्मा भूतानां भावनः प्रभुः ।

यस्मादष्टगुणनैश्वर्य्यं ददौ प्रीतः प्रजापतिः। प्रजापतीनां साध्यानां चिदशानाञ्च शाश्वतः।
स्तूयमानः स्तवैः शुभ्रैः सूतमागधवन्दिभिः। ऋषिभिश्च महाभागैर्व्वेदवेदाङ्गपारगैः।
संविधानमथाज्ञाप्य दारकाणां महाभुजः। गमनाय मतिञ्चक्रे वासुदेवः प्रतापवान्। १०४३०
आस्थितो गरुडं देवस्तस्य चानु हलायुधः। पृष्ठतोऽपि बलस्याथ प्रद्युम्नः शत्रुकर्षणः।
जय वाणं महाबाहो ये चास्यानुचरा रणे। न हि ते प्रमुखे स्थातुं कश्चिच्छक्तो महामृधे।
प्रसादात्ते भुवा लक्ष्मीर्व्विजयस्य पराक्रमे। विजेष्यसे रणे शत्रून् दैत्येन्द्रं सहसैनिकं।
सिद्धचारणसंघानां महर्षीणाञ्च सर्व्वशः। शृण्वन् वाचोऽभ्यरीतस्याः प्रययौ केशवो रणे।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि ऊनाशीत्यधिकशततमोऽध्यायः॥ १७९ ॥
॥ वैशम्पायन उवाच ॥ ततस्तूर्य्यनिनादैश्च शङ्खानाञ्च महास्वनैः। वन्दिमागधसूतानां स्तवैश्चापि सहस्रशः। १०४३५
शत्रून्मुखैर्जयाशीर्भिः स्तूयमानोऽथ मानवैः। बभार रूपं सोमार्कशकाणां सदृशं तदा।
अतीव शुशुभे रूपं व्योम तस्योत्पतिष्यतः। वैनतेयस्य भद्रं ते दृंहितं हरितेजसा।
अथाष्टबाहुः कृष्णस्तु पर्व्वताकारसन्निभः। विबभौ पुण्डरीकाक्षो विकाङ्क्षन् वाणसंचयं।
असिचक्रगदावाणा दक्षिणं पार्श्वमास्थिताः। चर्म्म शार्ङ्गं तथा वज्रं शङ्खश्चैवास्य वामतः।
शीर्षाणान्तु सहस्रञ्च विहितं शार्ङ्गधन्वना। सहस्रञ्चापि कायानां वहन् सङ्कर्षणस्तदा। १०४४०
श्वेतप्रहरणोऽधृष्यः कैलास इव शृङ्गवान्। आस्थितो गरुडं राम उद्यन्निव निशाकरः।
सनत्कुमारस्य वपुः प्रादुरासीन्महात्मनः। प्रद्युम्नस्य महाबाहोः संग्रामे विक्रमिष्यतः।
स पक्षबलविक्षेपैर्व्विधुन्वन् पर्व्वतान् बहून्। जगाम मार्गं बलवान् वातस्य प्रतिषेधयन्।
अथ वायोरतिगतिमास्थाय गरुडस्तदा। सिद्धचारणसंघानां सुखं मार्गमवातरत्।
अथ रामोऽब्रवीद्वाक्यं कृष्णमप्रतिमं रणे। स्वाभिः प्रभाभिर्हीनाः स्म कृष्ण कस्मादपूर्व्ववत्। १०४४५
सर्व्वे कनकवर्णाभाः संवृत्ताः स्म न संशयः। किमिदं ब्रूहि जस्तत्त्वं किं मेरोः पार्श्वगा वयं।
॥ भगवानुवाच ॥ मन्ये वाणस्य नगरमभ्यासस्थमरिन्दम। रक्षार्थं तस्य निर्य्यातो वह्निरेष स्थितो ज्वलन्।
अग्नेराहवनीयस्य प्रभया स्मः समाहृताः। तेन नो वर्णवैरूप्यमिदं जातं हलायुध।
॥ राम उवाच ॥ यदि स्मः सन्निकर्षस्था यदि निष्प्रभतां गताः। तद्विधत्स्व स्वयं बुद्ध्या यदत्रानन्तरं हितं।
॥ कृष्ण उवाच ॥ कुरुष्व वैनतेय त्वं यन्नः कार्य्यमनन्तरं। त्वया विधाने विहिते करिष्याम्यहमुत्तरं। १०४५०
॥ वैशम्पायन उवाच ॥ एतत् श्रुत्वा तु गरुडो वासुदेवस्य भाषितं। चक्रे मुखसहस्रं हि कामरूपी महाबलः।
गङ्गामुपागमत्तूर्णं वैनतेयस्ततो बली। आप्लुत्याकाशगङ्गायामापीय सलिलं बहु।
प्रववर्षोपरि गतो वैनतेयः प्रतापवान्। तेनाग्निं शमयामास बुद्धिमान् विनतात्मजः।
अग्निराहवनीयस्तु ततः शान्तिमुपागमत्। तं दृष्ट्वाहवनीयन्तु शान्तमाकाशगङ्गया।
परमं विस्मयं गत्वा सुपर्णो वाक्यमब्रवीत्। अहो वीर्य्यमथाग्नेस्तु योऽदहद्युगसंक्षये। १०४५५
तदेव वर्णवैरूप्यं चक्रे कृष्णस्य धीमतः। त्रयस्त्रयाणां लोकानां पर्य्याप्ता इति मे मतिः।

कृष्णः सङ्कर्षणश्चैव प्रद्युम्नश्च महाबलः । ततः प्रशान्ते दहने संप्रतस्थे स पक्षिराट् ।
स पक्षबलविक्षेपैः कुर्व्वन् घोरं महास्वनं । तान्दृष्ट्वा चिन्तयंस्तत्र रुद्रस्यानुचराग्नयः ।
आस्थिता गरुडं ह्येते नानारूपा भयावहा । किमर्थमिह सम्प्राप्ता के वापीमे नरास्त्रयः ।
निश्चयं नाध्यगच्छन्त ते गिरिव्रजबुद्धयः । प्रावर्त्तयंश्च संग्रामं तैस्त्रिभिः सह यादवैः । १०४६०
तेषां युद्धे प्रसक्तानां सन्नादः सुमहानभूत् । तञ्च श्रुत्वा महानादं सिंहानामिव गर्ज्जतां ।
अथाङ्गिराः स्वपुरुषं प्रेषयामास बुद्धिमान् । यत्र तद्वर्त्तते युद्धं तत्र गच्छस्व माचिरं ।
अथाशुगस्तु वाणेन पुरुषोऽतिमनोजवः । दृष्ट्वा तत् सर्व्वमागच्छ इत्युक्तः प्रस्थितस्त्वरन् ।
तथेत्युक्ता स तद्युद्धं वर्त्तमानमुदैक्षत । अग्नीनां वासुदेवेन संसक्तानां महामृधे ।
ते जातवेदसः सर्व्वे कल्माषः कुसुमस्तथा । दहनः शोषणश्चैव तपनश्च महाबलः । १०४६५
स्वाहाकारस्य विषये प्रख्याताः पञ्च वह्नयः । अथापरे महाभागाः स्वैरनीकैर्व्यवस्थिताः ।
पिठरः पतगः स्वर्णस्त्वागाधो भ्राज एव च । स्वधाकाराश्रयाः पञ्च प्रायुद्धंस्तेऽपि चाग्नयः ।
ज्योतिष्टोमविभागौ च वषट्काराश्रयौ पुनः । द्वावग्नी संप्रयुध्येते महात्मानौ महाद्युती ।
आग्नेयं रथमास्थाय शूलमुद्यम्य भास्वरं । तयोर्मध्येऽङ्गिराश्चैव महर्षिर्व्विबभौ रणे ।
स्थितमङ्गिरसं दृष्ट्वा विमुञ्चन्तं शिताङ्कुरान् । कृष्णः प्रोवाच संक्रुद्धः स्मयन्निव पुनः पुनः । १०४७०
तिष्ठध्वमग्नयः सर्व्वे एष वो विदधे भयं । ममास्त्रतेजसा दग्धा दिशो यास्यथ विद्रुताः ।
अथाङ्गिरास्त्रिशूलेन दीप्तेन समधावत । आददान इव क्रोधात् कृष्णप्राणान्महामृधे ।
त्रिशूलं तस्य तद्दीप्तञ्चिच्छेद परमेषुभिः । अर्द्धचन्द्रैस्तया तीक्ष्णैर्यमार्कदहनप्रभैः ।
स्थूणाकर्णेन वाणेन दीप्तेन स महायशाः । विव्याधान्तकतुल्येन वक्षस्यङ्गिरसन्ततः ।
रुधिरौघप्लुतैर्गात्रैरङ्गिरा विह्वलन्निव । विष्टब्धगात्रः सहसा पपात धरणीतले । १०४७५
शेषाग्नयस्ततः सर्व्वे चत्वारो ब्रह्मणः सुताः । अवाद्रवंस्ततः शीघ्रं वाणस्य पुरमन्तिकात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अग्निजये अशीत्यधिकशततोऽध्यायः ॥ १८० ॥
॥ वैशम्पायन उवाच ॥ अथ वाणपुरं दृष्ट्वा कृष्णं प्रोवाच नारदः । एतत्तच्छोणितपुरं कृष्ण पश्य महाभुज ।
अत्र रुद्रो महातेजा रुद्राण्या सहितोऽवसत् । गुहश्च वाणगुप्त्यर्थं सततं क्षेमकारणात् ।
नारदस्य वचः श्रुत्वा कृष्णस्त्विदमथाब्रवीत् । क्षेमं नश्चिन्त्यतामत्र श्रूयताञ्च महामुने ।
यदि चावतरेद्रुद्रो वाणसंरक्षणम्प्रति । शक्तितो वयमप्यत्र सह योत्स्यामि तेन वै । १०४८०
एवं विवदतोस्तत्र कृष्णनारदयोस्तदा । प्राप्ता निमिषमात्रेण शीघ्रत्वाद्गरुडस्य ते ।
ततः शङ्खं समाधाय वदने पुष्करेक्षणः । वातवेगेन तं दध्मौ मेघस्तन्द्रमिवोद्गिरन् ।
ततः प्रध्माय तं शङ्खं भयमुत्पाद्य वीर्य्यवान् । प्रविवेश पुरं कृष्णो वाणस्याद्भुतकर्म्मणः ।
ततः शङ्खप्रणादैश्च भेरीणाञ्च महास्वनैः । वाणानीकानि सहसा समनह्यन्त सर्व्वशः ।
ततः किङ्करसैन्यं तद्व्यादिष्टं समरेऽभ्ययात् । कोटिशश्चापि बहुशो दीप्तप्रहरणोद्यतं । १०४८५

तदसङ्ख्येयमेकस्थं महाभ्रघनसन्निभं। नीलाञ्जनचयप्रख्यमप्रमेयमथाक्षयं।
ते प्रदीप्तप्रहरणा दैत्यदानवराक्षसाः। प्रमाथगणमुख्याश्च प्रायुध्यन् कृष्णमव्ययं।
सर्व्वतस्तैः प्रदीप्तास्त्रै रोचिष्मद्भिरिवाग्निभिः। अभ्युपेत्य तदा तूर्णं यक्षराक्षसदानवैः।
पीयते रुधिरं तेषां चतुर्णामपि संयुगे। तद्बलन्तु समासाद्य बलभद्रो महाबलः।
प्रोवाच वचनं तत्र परस्य बलनाशनः। कृष्ण कृष्ण महाबाहो विधत्स्वैषां महाभयं। १०४९०
इति सम्बोदितः कृष्णो बलभद्रेण धीमता। तेषां बधार्थमाग्नेयं जग्राह पुरुषोत्तमः।
अस्त्रमस्त्रविदां श्रेष्ठो यमान्तकसमप्रभः। प्रविधूयासुरगणान् क्रव्यादास्त्रेण तेजसा।
प्रययौ त्वरया युक्तो यत्रादृश्यत तद्बलं। शूलपट्टिशशक्त्यृष्टिपिनाकपरिघायुधं।
प्रमाथगणभूयिष्ठं बलन्तदभवत् चितौ। शैलमेघप्रतीकाशैर्नानारूपैर्भयावहैः।
वाहनैः संघशः सर्व्वे योधास्तत्रावतस्थिरे। वातोद्धूतैरिव घनैर्व्विप्रकीर्णै रिवाचलैः। १०४९५
शुशुभे तत्र बहुलैरनीकैर्व्वहुधन्विभिः। कुलिशैः पट्टिशैः शूलैर्गदाभिर्मुषलैस्तथा।
आधावत्तदसङ्ख्येयं शुशुभे सर्व्वतो बलं। वैनतेयगतो रामस्तान्दृष्ट्वा कृष्णमब्रवीत्।
कृष्ण कृष्ण महाबाहो यदेतद्दृश्यते बलं। एतैः सह रणे योद्धुमिच्छामि पुरुषोत्तम।
॥ कृष्ण उवाच ॥ ममाप्येषैव संजाता बुद्धिरित्यब्रवीत् स तं। एभिः सह रणे योद्धुमिच्छेयं योधसत्तमैः।
युध्यतः प्राङ्मुखस्यास्तु सुपर्णो वै ममाग्रतः। सव्ये पार्श्वे च प्रद्युम्नस्तथा मे दक्षिणे भवान्। १०५००
रक्षितव्यमथान्योन्यमस्मिन् घोरे महामृधे।
॥ वैशम्पायन उवाच ॥ एवं ब्रुवन्तस्ते न्योऽन्यमधिरूढाः खगोत्तमं। गिरिशृङ्गनिभैर्युद्धे गदामुषललाङ्गलैः।
युध्यतो रौहिणेयस्य रौद्रं रूपमभूत्तदा। युगान्ते सर्व्वभूतानि कालस्येव दिधक्षतः।
आकृष्य लाङ्गलाग्रेण मुषलेनावपोथयत्। चरत्यतिबलो रामो युद्धमार्गविशारदः।
प्रद्युम्नः शरजालैस्तान् समन्तात् पर्य्यवारयत्। दानवान् पुरुषव्याघ्रो युध्यमानान्महाबलः। १०५०५
स्निग्धाञ्जनचयप्रख्यः शङ्खचक्रगदाधरः। प्रध्माप्य बहुशः शङ्खमयुध्यत जनार्द्दनः।
पक्षप्रहाराभिहतान् तुण्डाग्रनखविक्षताः। नीता वैवस्वतमुखं वैनतेयेन धीमता।
तैर्हन्यमानं दैत्यानामनीकं भीमविक्रमं। अभज्यत तदा सङ्ख्ये बाणवर्षसमाहतं।
भज्यमानेष्वनीकेषु त्रातुकामः समभ्ययात्। ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः। नदन्मेघसहस्रस्य तुल्यो निर्घातनिस्वनः। १०५१०
निश्वसन् जृम्भमाणश्च निद्रान्विततनुर्भृशं। नेत्राभ्यामाकुलं वक्त्रं मुहुः कुर्व्वन् भ्रमन्मुहुः।
संहृष्टरोमा ग्लानाक्षः चिन्ताविष्ट इव श्वसन्। हलायुधमभिक्रुद्धः साक्षेपमिदमब्रवीत्।
किमेवं बलमत्तोऽसि न मां पश्यसि संयुगे। तिष्ठ तिष्ठ न मे जीवन् मोक्ष्यसे रणमूर्द्धनि।
इत्येवमुक्त्वा प्रहसन् हलायुधमुपाद्रवत्। युगान्ताग्निनिभैर्घोरैर्मुष्टिभिर्जनयन् भयं।
चरतस्तत्र संग्रामे मण्डलानि सहस्रशः। रौहिणेयस्य शैघ्र्येण न च स्थानमदृश्यत। १०५१५

तस्य भस्म तदाक्षिप्तं ज्वरेणाप्रतिमौजसा । शैष्णाद्दत्तोऽनिपतितं शरीरे पर्व्वतोपमे ।
तद्भस्म वक्षसस्तस्य मेरोः शिखरमागमत् । प्रदीप्तं पतितं तत्र गिरिशृङ्गं व्यदारयत् ।
शेषेण चापि जज्वाल भस्मना कृष्णपूर्व्वजः । निश्वसन् जृम्भमाणश्च निद्रान्विततनुर्भृशं ।
नेत्रयोराकुलत्वञ्च मुहुः कुर्व्वन् भ्रमंस्तथा । संहृष्टरोमा स्वानाक्षः निःश्वसन्निव श्वसन् ।
ततो हलायुधो मन्नः कृष्णमाह विचेतनः । कृष्ण कृष्ण महाबाहो प्रदीप्तोऽस्म्यभयङ्कर । १०५२०
दह्यामि सर्व्वशस्तात कथं शान्तिर्भवेन्मम । इत्येवमुक्ते वचने बलिनामिततेजसा ।
प्रहस्य वचनं प्राह कृष्णः प्रहरताम्वरः । न भेतव्यमितीत्युक्ता परिष्वक्तो हलायुधः ।
कृष्णेन परमस्नेहात्ततो दाहाद्व्यमुच्यत । मोक्षयित्वा बलं तत्र दाहात्तु मधुसूदनः ।
प्रोवाच परमक्रुद्धो वासुदेवो ज्वरं ततः ।
॥ भगवानुवाच ॥ एह्येहि ज्वर युध्यस्व या ते शक्तिर्महामृधे । यच्च ते पौरुषं सर्व्वं तद्दर्शय यतस्व च । १०५२५
सव्येतराभ्यां पाणिभ्यामेवमुक्तो ज्वरस्तदा । चिक्षेपैवं महद्भस्म ज्वालागर्भं महाबलः ।
ततः प्रदीप्तगात्रस्तु मुहूर्त्तमभवत् प्रभुः । कृष्णः प्रहरतां श्रेष्ठः शमश्चाग्निर्गतस्तदा ।
ततस्तैर्भुजगाकारैर्बाहुभिः प्रोच्छ्रितैस्तदा । जघान कृष्णं ग्रीवायां मुष्टिनैकेन चोरसि ।
स संप्रहारस्तुमुलस्तयोः पुरुषसिंहयोः । ज्वरस्य तु महायुद्धे कृष्णस्य च महौजसः ।
पर्व्वतेषु पतन्तीनामशनीनामिव स्वनः । कृष्णज्वरभुजाघातैर्युद्धे तस्मिन् सुदारुणे । १०५३०
नैवमेवं प्रहर्त्तव्यमिति तत्र महास्वनः । मुहूर्त्तमभवद्युद्धमन्योऽन्यं सुमहात्मनोः ।
ततो ज्वरं कनकविचित्रभूषणं न्यपीडयद्भुजयुगलेन संयुगे । जगत्त्रयं समुपनयन् जगत्पतिः शरीरदृष्टगगनचरो महामृधे ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि विष्णुज्वरयुद्धे एकाशीत्यधिकशततोऽध्यायः ॥ १८१ ॥
॥ वैशम्पायन उवाच ॥ स्तत इत्यभिविज्ञाय ज्वरं शत्रुनिसूदनः । कृष्णो भुजबलात्तन्तु चिक्षेपाय महीतले ।
भुक्तमात्रस्तु बाहुभ्यां कृष्णदेहं विवेश सः । अमुक्ता विग्रहन्तस्य कृष्णस्याप्रतिमौजसः ।
सव्याविष्टस्तदा तेन ज्वरेणाप्रतिमौजसा । कृष्णः स्खलन्निव मुहुः क्षितौ गाढं व्यवर्त्तत । १०५३५
जृम्भते श्वसते चैव स्खलते च पुनः पुनः । रोमाञ्चोत्थितगात्रस्तु निद्रया चाभिभूयते ।
ततः स्थैर्य्यं समालम्ब्य कृष्णः परपुरञ्जयः । विकुर्व्वते महायोगी जृम्भमाणः पुनः पुनः ।
ज्वराभिभूतमात्मानं विज्ञाय पुरुषोत्तमः । सोऽसृजज्ज्वरमन्यं तु पूर्व्वज्वरविनाशनं ।
घोरं वैष्णवमत्युग्रं सर्व्वप्राणिभयङ्करं । स सृष्टवांस्तु तेजस्वी बलवान् भीमविक्रमः ।
कृष्णज्वरो ज्वरं पूर्व्वं गृहीत्वा स्वेन तेजसा । कृष्णाय दृष्टः प्रायच्छत्तं जग्राह ततो हरिः । १०५४०
ततस्तं परमक्रुद्धो वासुदेवो महाबलः । स्वगात्रात् स्वज्वरेणैव निष्क्रामयत वीर्य्यवान् ।
आविध्य भूतले चैनं शतधा कर्त्तुमुद्यतः । व्याघोषयज्ज्वरस्तत्र भोः परित्रातुमर्हसि ।
आविध्यमाने तस्मिंस्तु कृष्णेनामिततेजसा । अशरीरा ततो वाणी तमुवाचान्तरीक्षगा ।
कृष्ण कृष्ण महाबाहो यदूनां नन्दिवर्द्धन । मावधीर्ज्वरमेतं तु रक्षणीयस्त्वयाऽनघ ।

इत्येवमुक्ते वचने तं मुमोच हरिः स्वयं । भूतभव्यभविष्यस्य जगतः परमो गुरुः । १०५४५
कृष्णस्य पादयोर्मूर्द्ध्ना शरणं स गतो ज्वरः । प्रणम्य च हृषीकेशं ज्वरो वाक्यमथाब्रवीत् ।
शृणुष्व मम गोविन्द विज्ञाप्यं यदुनन्दन । यो मे मनोरथो देव तं त्वं कुरु महाभुज ।
अहमेको ज्वरस्तात नान्यो लोके ज्वरो भवेत् । त्वत्प्रसादाद्धि देवेश वरमेतं वृणोम्यहं ।
॥ देव उवाच ॥ एवमस्तु भद्रं ते यथा त्वं ज्वर काङ्क्षसे । वरार्थिनां वरो देयो भवांश्च शरणागतः ।
एक एव ज्वरो लोके भवानस्तु यथा पुरा । योऽयं मया ज्वरः सृष्टो मय्येवैष प्रलीयतां । १०५५०
॥ वैशम्पायन उवाच ॥ एवमुक्ते तु वचने ज्वरं प्रति महायशाः । कृष्णः प्रहरतां श्रेष्ठः पुनर्व्वाक्यमुवाच ह ।
॥ कृष्ण उवाच ॥ शृणुष्व ज्वर सन्देशं यथा लोके चरिष्यसि । सर्व्वजातिषु विन्यस्तस्तथा स्थावरजङ्गमे ।
त्रिधा विभज्य चात्मानं मत्प्रियं यदि काङ्क्षसे । चतुष्पदान् भजैकेन द्वितीयेन च स्थावरान् ।
तृतीयो यश्च ते भागो मानुषेषु प्रकाश्यते । त्रिधा भूतं वपुः कृत्वा पक्षिषु त्वं भव ज्वर ।
चतुर्थो यस्तृतीयस्य भविष्यति च ते ध्रुवं । एकान्तरस्तु भीमः खोरकश्च चतुर्थकः । १०५५५
मानुषेष्वेकपादेन वस त्वं प्रविभज्य वै । जातिष्वथावशेषासु निबोध त्वं शृणुष्व मे ।
वृक्षेषु कीटरूपेण तथा सङ्कोचपत्रकः । पाण्डुपत्रश्च विख्यातः फलेष्वातुर्य्यमेव च ।
पद्मिनीषु हिमो भूत्वा पृथिव्यामपि चोषरः । अपान्तु नीलिकां विद्यात् शिखोद्भेदश्च बर्हिणां ।
गैरिकः पर्व्वतेष्वेव मत्प्रसादाद्भविष्यसि । गोष्वपस्मारको भूत्वा खोरकश्च भविष्यसि ।
एवं विविधरूपेण भविष्यसि महीतले । दर्शनात् स्पर्शनाच्चैव प्राणिनां वधमेष्यसि । १०५६०
ऋते देवमनुष्यांश्च नान्यस्त्वां विषहिष्यति ।
॥ वैशम्पायन उवाच ॥ कृष्णस्य वचनं श्रुत्वा ज्वरो हृष्टमना ह्यभूत् । प्रोवाच किञ्चिद्वचनं प्रणतात्मा कृताञ्जलिः ।
॥ ज्वर उवाच ॥ सर्व्वजातिप्रभुत्वेन कृतो धन्योऽस्मि माधव । भूयश्च ते वचः कर्त्तुमिच्छामि पुरुषर्षभ ।
तदाज्ञापय गोविन्द किं करोमि महाभुज ।
अहमसुरकुलप्रमाथिना त्रिपुरहरेण हरेण निर्म्मितः । रणशिरसि विनिर्ज्जितस्त्वया प्रभुरसि मेऽद्य तवास्मि किङ्करः । १०५६५
॥ वैशम्पायन उवाच ॥ ज्वरस्य वचनं श्रुत्वा वासुदेवोऽब्रवीदिदम् । अभिसन्धिं शृणुष्वाद्य यत्त्वां वक्ष्यामि निश्चयात् ।
॥ ज्वर उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यत्त्वया मत्प्रियं कृतं । आज्ञापय प्रियं किन्ते चक्रायुध करोम्यहं ।
॥ कृष्ण उवाच ॥ महाम्मृधे तव मम च द्वयोरिमं पराक्रमं भुजबलकेवलात्मयोः । प्रणम्य मामेकमनाः पठेत्तु यः स वै भवेज्ज्वर विगतज्वरो नरः ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कृष्णेन ज्वरः शाश्वतमहाबलः । प्रोवाच यदुशार्दूलमेवमेतद्भविष्यति । १०५७०
वरं लब्ध्वा ज्वरो हृष्टः कृष्णाच्च समयं पुनः । प्रणम्य शिरसा कृष्णमपक्रान्तस्ततो रणात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि बाणयुद्धे ज्वरापक्रमे द्व्यशीत्यधिकशततोऽध्यायः ॥ १८२ ॥
॥ वैशम्पायन उवाच ॥ ततस्ते त्वरिताः सर्व्वे जयस्तय इवाग्नयः । वैनतेयमथारुह्य युध्यन्ते रणमूर्द्धनि ।
ततः सर्व्वाण्यनीकानि बाणवर्षैरवाकिरन् । अर्द्दयन्तो गरत्मन्तं नदन्तोऽतिबला रणे ।

चक्रलाङ्गलपातैश्च बाणवर्षैश्च पीडितं। सञ्चुकोप महानीकं दानवानां महात्मनां।
कक्षेऽग्निरिव संवृद्धः शुष्केन्धनसमीरितः। कृष्णबाणाग्निरुद्धूतो विवृद्धिं परमां गतः।
दानवानां सहस्राणि तस्मिन् समरमूर्द्धनि। युगान्ताग्निरिवार्च्चिष्मान्दहमानो व्यराजत।
तां दीप्यमानां महतीं नानाप्रहरणान्वितां। सेनां बाणः समासाद्य वारयन् वाक्यमब्रवीत्।
लाघवं समुपागम्य किमेवं भयविक्लवाः। दैत्यवंशे समुत्पन्नाः पलायध्वं महाहवात्।
कवचासिगदाप्रासखड्गचर्म्मपरश्वधान्। उत्सृज्योत्सृज्य गच्छन्ति भवन्तोऽन्तरीक्षगाः।
स्वजातिञ्चैव भावञ्च हरसंसर्गमेव च। मानयद्भिर्न गन्तव्यमेषो ह्यहमवस्थितः।
एवमुच्चारितां वाचं शृण्वन्तस्तामचिन्तयन्। आपक्रामन्त ते सर्व्वे दानवा भयमोहिताः।
प्रमाथगणशेषं तु तदनीकमतिष्ठत। भग्नावशेषं युद्धाय पुनश्चक्रे मनस्तदा।
कुम्भाण्डो नाम बाणस्य सखाऽमात्यश्च वीर्य्यवान्। भग्नं बलं समालोक्य वचश्चेदमथाब्रवीत।
एष बाणः स्थितो युद्धे शङ्करोऽयं गुहस्तथा। किमर्थं बलमुत्सृज्य भवन्तो यान्ति मोहिताः
प्राणांस्त्यक्त्वा च युध्यध्वं सर्व्वे दानवपुङ्गवाः। एवं कुम्भाण्डवाक्यन्ते शृण्वन्तो भयमोहिताः।
चक्राग्निभयसंविग्नाः सर्व्वे यान्ति दिशो दश। भग्नं बलं ततो दृष्ट्वा कृष्णेनामिततेजसा।
संरक्तनयनः स्थाणुर्युद्धाय पर्य्यवर्त्तत। बाणसंरक्षणं कर्त्तुं रथमास्थाय सुप्रभं।
देवः कुमारश्च तथा रथेनाग्निनिभेन वै। नन्दीश्वरसमायुक्तं रथमास्थाय वीर्य्यवान्।
सन्दष्टौष्ठपुटो रुद्रः प्राधावत यतो हरिः। पिबन्निव तदाकाशं सिंहयुक्तो महास्वनः।
रथो भाति घनोन्मुक्तः पौर्णमास्यां यथा शशी। ततो गणसहस्रैस्तु नानारूपैर्भयावहैः।
नर्दद्भिर्व्विविधान्नादाञ्छथो देवस्य सोऽभ्ययात्। केचित् सिंहमुखास्तत्र तथा व्याघ्रमुखास्तु ह।
नागाश्वोष्ट्रमुखास्तत्र प्रावेपन्नभिपीडिताः। व्यालयज्ञोपवीताश्च केचित्तत्र महाबलाः।
खरोष्ट्रगजवक्त्राश्च ऋक्षग्रीवाश्च संस्थिताः। छागगोमायुमार्ज्जारमेषवक्त्रास्तथापरे।
चीरिणः शिखिनश्चान्ये जटाभोर्द्ध्वशिरोरुहाः। नग्नाः परिपतन्ति स्म शङ्खदुन्दुभिनिस्वनैः।
केचित् सौम्यमुखास्तत्र दिव्यैरस्त्रैरलङ्कृताः। नानापुष्पकृतापीडा नानाप्रहरणायुधाः।
वामना विकटाश्चैव सिंहव्याघ्रपरिच्छदाः। रुधिरार्द्रमहादंष्ट्रा महामांसबलिप्रियाः।
देवं संपरिवार्य्याथ महाशत्रुप्रमर्द्दनं। लीलायमानास्तिष्ठन्ति संग्रामाभिमुखोन्मुखाः।
ततो दिव्यरथं दृष्ट्वा रुद्रस्याक्लिष्टकर्म्मणः। कृष्णो गरुडमास्थाय ययौ रुद्राय संयुगे।
वैनतेयस्तमस्यन्तमायान्तं चापपाणिहरः। हरिं विव्याध कुपितो नाराचानां शतेन च।
स शरैरर्द्दितस्तेन हरेणामित्रकर्षिणा। हरिर्जग्राह कुपितो शङ्खं पाञ्चजन्यमुत्तमं।
प्रचचाल ततो भूमिर्व्विष्णुरुद्रप्रपीडिता। नागाश्चोर्द्ध्वमुखास्तत्र विचेलुरभिपीडिताः।
पर्व्वताः प्रस्रुतास्तत्र जलधाराभिराप्लुताः। केचिन्मुमुचिरे तत्र शिखराणि समन्ततः।
दिशश्च विदिशश्चैव भूमिराकाशमेव च। प्रदीप्तानीव दृश्यन्ते स्थाणुकृष्णसमागमे।

विस्तु: सर्व्वगात्रेभ्यो ज्वलन्तीव युगाग्नय: । यावन्ति वर्षधारास्तास्तावन्त्योऽर्च्चिषोऽनलस्य च ।
शमेयुर्व्वारिधाराभिर्विपुले वसुधातले । वर्षाभ्यां युज्यमानस्य वायुर्हाधूयते महान् । ११००५
दिव्यषिङ्गुणोद्भूत: सूक्ष्म: प्राणविवर्द्धन: । वेगवान भीमनिर्घोषो बलवान् प्राणगोचर: ।
तैरेव चाग्निसंघातैर्धातुभि: सह सङ्गत: । सहस्रशोऽथ शतशो मूर्त्तिं कृत्वा पृथग्विधां ।
अग्निर्व्वायुर्जलं भूमिर्द्धातवो ब्रह्मचोदिता: । समवायत्वमापन्ना बीजभूता महीतले ।
संघातं ब्रह्मवेगेन धातवो गमिता नृप । यद्ब्रह्म चतुर्वोर्मध्ये स सूक्ष्म: पुरुषो विराट् ।
तयोरन्यान् बहून् सूक्ष्मानसृजत् पुरुषोत्तम: । स एव भगवान् विष्णुर्व्यक्तोऽव्यक्त: प्रजापति: । ११०१०
आधार: सर्व्वभूतानां प्रलये प्रलयान्तकृत् । तं मूर्द्धि धातुभिर्व्वद्धं विशन्ति ब्रह्मचोदिता: ।
तेऽन्तरा पुरुषा: सर्व्वे ज्ञातार: सुखदु:खयो: । अथ चेष्टितुमारब्धा मूर्त्तयो ब्रह्मसंस्थिता: ।
भित्त्वा च धरणीं देवीं प्रापद्यन्त दिशो दश । इत्येते पार्थिवा: सर्व्वे स्वयो ब्रह्मनिर्म्मिता: ।
तत्रैव प्रलयं याता भूमित्वमुपयान्ति च । कर्म्मक्षयाद्विमुच्यन्ते धातुभि: कर्म्मबन्धनै: ।
कर्म्मक्षयाद्विमुक्तत्वादिन्द्रियाणाञ्च बन्धनात् । तामेव प्रकृतिं यान्ति अज्ञाता कर्म्मगोचरै: । ११०१५
चराज्जातं चरश्चैव अग्निगर्भास्तपोमया: । येन तन्तुरिवाच्छिन्नो भावाभाव: प्रवर्त्तते ।
धूमादभ्रन्तु संभूतमभ्रात्तोयं सुनिर्म्मलं । जगती जलसम्भूता जगत्येव च यत्फलं ।
फलाद्रसश्च संजज्ञे रसात् प्राणश्च देहिनां । रसस्तु तत्क्षयो जज्ञे यत्तद्ब्रह्म सनातनं ।
अज्ञैर्द्दिष्टं प्रधानन्तु बहुभि: कारणान्तरै: । ब्राह्मणैस्तपसि श्रान्तै: सत्यव्रतपरायणै: ।
अव्यक्ताद्व्यक्तमापन्नं खेन भाविन भारत । अन्त:स्थं सर्व्वभूतेषु चरन्तं विद्यया सह । ११०२०
कर्म्म कर्त्तेति राजेन्द्र विषयस्थमनेकधा । नोपलभ्येत चक्षुर्भ्यां तपसा दग्धकिल्बिषै: ।
उपलभ्येत चक्षुर्भ्यां यतिभिर्ब्रह्मवादिभि: । नि:सृतस्तु भुवोर्मध्ये मेघमुक्त इवांशुमान् ।
चरद्भि: पवित्रलोके निर्द्वन्द्वैर्निष्परिग्रहै: । योगधर्म्मेण कारव्य ध्रुवमासाद्यते फलं ।
प्रादुर्भावं चयश्चैव भूतस्य निधनं तथा । विधत्ते शतशो ब्रह्मा संचये च भवे तथा ।
कर्म्मण: कर्म्मयोगज्ञो भूतेभ्यो नात्र संशय: । अविनाशाय लोकस्य धर्म्मसंस्थापनेन वै । ११०२५
युगं द्वादशसाहस्रं सहस्रयुगसंश्रितं । एतद्ब्रह्मयुगं नाम युगानां प्रथमं युगं ।
एवं युगसहस्रान्ते संहार: प्रलयोऽन्तकृत् । सूक्ष्मं भवति लोकानां निर्व्विकारमचेतनं ।
तथा प्रलयमापन्नं जगत् सर्व्वं सनातनं । ब्रह्म सम्पद्यते सूक्ष्मं निर्म्मितं कारणैर्गुणै: ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे अष्टाधिकद्विशततमोऽध्याय: ॥ २०८ ॥
॥ जनमेजय उवाच ॥ प्राम्वंशं श्रोतुमिच्छामि विस्तरेण महामुने । आद्ययोर्युगयोर्ब्रह्मन् ब्रह्मप्राप्तस्य सर्व्वश: ।
॥ वैशम्पायन उवाच ॥ शृणु विस्तरत: सर्व्वं यन्मां पृच्छसि मेधया । उपपन्नेन मनसा दैवप्रत्ययसाधिना । ११०३०
वृद्धिम्प्राप्तस्तु भगवान् योगात्मा ब्रह्मसम्भव: । भूतानां बहुलत्वञ्च चकारेहेश्वर: प्रभु: ।
स्थितो ब्रह्मासने ब्रह्मा विचिन्त्य सहसा प्रभु: । अचलेनैव भावेन स्थाणुभूतेन भारत ।

रक्तस्य मोचविषये सर्व्वज्ञानमयी पदे । यस्मात् पदसहस्राणि प्रभवन्त्युद्भवन्ति च ।
ब्रह्मयज्ञन्तु यजतो योगात् वेदात्मकं सदा । ब्रह्मणो विपुलं ज्ञानमैश्वर्य्यञ्च प्रवर्त्तते ।
ततः प्रथममैश्वर्य्यं युञ्जानेन प्रवर्त्तितं । ब्रह्मणा ब्रह्मभूतेन भूतानां हितमिच्छता । ११०३५
तदा त्वाकाशमैश्वर्य्यं युञ्जानस्य प्रवर्त्तते । ब्रह्मणो ब्रह्मभूतस्य निर्व्विकारेण कर्म्मणा ।
तदाऽन्तरीक्षं संप्राप्तं ब्रह्म निर्म्मलमव्ययं । संहारः सर्व्वभूतानां नराणां ब्रह्मवादिनां ।
ध्रुवमैश्वर्य्ययोगाणां प्रतिपद्यन्ति देहिनः । आकाशैश्वर्य्यभूतेन संयोगे ब्रह्मवादिनां ।
प्रवर्त्तमानमैश्वर्य्यं वायुभूतं करोति च । विकारैर्व्बहुभिः प्राप्तैः सम्पतद्भिर्म्महाबलैः ।
एतैर्व्विकारैः संवृत्तैर्निरुद्धैश्चैव सर्व्वशः । ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति ब्राह्मणः । ११०४०
शरीरादभिनिष्क्रम्य आकाशेन प्रधावति । निरालम्बो निरालम्बानालम्ब्य मनसा ततः ।
ऐश्वर्य्यभूतो भूतात्मा चरन् दिवि न दृश्यते । चक्षुर्भिर्व्बहुभिर्लोकैः पुरन्दरसमैरपि ।
ओङ्कारं ये त्वधीयन्ते मनसा ब्रह्मसत्तमाः । विमुक्ताः सर्व्वकर्म्मभ्यस्ते तं पश्यन्ति साधवः ।
एतद्धि परमं ब्रह्म ब्राह्मणानां मनीषिणां । अन्तश्चरति भूतानां विद्धि चेतनया सह ।
एष शब्दो महानादः पुराणो ब्रह्मसम्भवः । वायुभूतोऽक्षरं प्राप्तो वदन्त्येवं द्विजातयः । ११०४५
अरूपी रूपसम्पन्नो धातुभिः सह सङ्गतः । अन्तश्चरति भूतेषु कामकारकरो वशी ।
ततः परमनुध्याय मनसा पूर्य्यन्निव । वेदात्मकं तदा यज्ञं चिन्तयन्तो मनीषिणः ।
ब्राह्मणाः शुचयो दान्ता यशोऽयुक्तंस्तदन्वयात् । ब्रह्मलोकं काङ्क्षमाणा वैष्णवं पदमुत्तमं ।
पदहेतोः क्रियाः सर्व्वाः कुर्व्वन्ति विगतज्वराः । न ह्येते प्रसवादस्मि भवमिच्छन्ति भारत ।
त्रिभिर्म्माल्योपहारैश्च प्रतिभानैश्च वै द्विजाः । यजन्ति परमात्मानं विष्णुं सत्यपराक्रमं । ११०५०
यजनं विक्रमञ्चैव ब्रह्माद्याः संप्रचक्रिरे । ब्रह्मा च वैष्णवं तेजो वेदोक्तैर्व्वचनैर्नृप ।
ब्राह्मणैर्ब्रह्मविद्भिश्च ब्रह्मज्ञैर्ब्रह्मवादिभिः । शुचिभिः कर्म्मनिर्मुक्तैः सत्यव्रतपरायणैः ।
धातुभिर्म्मोक्षकाले च महात्मा सम्प्रदृश्यते । तदेव परमं ब्रह्म वैष्णवं परमाद्भुतं ।
रसात्मकं तदैश्वर्य्यं विकारान्ते प्रदृश्यते । घोररूपा विकारास्ते व्यथयन्ति महात्मनः ।
सञ्छाद्यतीव तोयेन क्षुभ्यमाणो विचेतनः । ऊर्म्मिभिश्छाद्यते चैव शीतोष्णाभिर्विकारतः । ११०५५
महार्णवगतश्चैव दह्यति न च सज्जते । भग्नश्चैव महानद्यः सलिले चैव सीदति ।
सीदमानश्च सलिले स शीतात्पात्यते बलात् । आसनाच्छादनाच्चैव मुच्यमानो विचेतनः ।
श्वभ्रे प्रपद्यमानश्च तोयेन परिषिच्यते । शुक्लवर्णेन बहुधा स्रोतसा मूर्द्ध्नि सर्व्वशः ।
ऊर्द्ध्वं ज्योतिरवेक्षंश्च शुभैः पोतैश्च छाद्यते । वारिपूरैः सुगम्भीरैर्व्विद्युद्भिरिव भासितैः ।
एतैर्व्विकारैः संवृत्तैर्निरुद्धैश्चैव सर्व्वशः । ध्रुवमैश्वर्य्यमासाद्य सिद्धो भवति ब्राह्मणः । ११०६०
रसात्मकं तदैश्वर्य्यं जिह्वायादभिनिःसृतं । सहस्रधारं विततं मेघत्वं समुपागतं ।
रसांश्च विविधान् योगात् संसिद्धः सृजते प्रभुः । धात्वर्थं सर्व्वभूतानां योगप्राप्तेन हेतुना ।

तेजसो रूपमैश्वर्य्यं विकारैः सह वर्द्धते । आत्मनो विप्रजननं स्रष्टा ब्राह्मणकारणे ।
उग्ररूपैर्व्विकारैश्च हन्यते दण्डपाणिभिः । घोररूपैः सुगघोरैः पिशाचैर्व्वरविग्रहैः ।
नैवं समुद्धरन्तोमं जिह्वाग्रज्वालाश्च विन्दति । नदन्ति युगपन्नादं नृत्यमानाः पुनः पुनः । ११०६५
पुनरेव तदा भूत्वा बहुरूपास्तदाऽभवन् । नृत्यमानाः प्रणायन्ति तर्पयन्तो विशेषतः ।
स्त्रीभूताश्च ततः सर्व्वे युञ्जानास्तावलम्बिरे । कण्ठेषु बहुरूपत्वात् विप्रैश्चैव प्रलोभयन् ।
मधुरैरभिधानैश्च व्याहरन्ति नभीतवत् । पतन्ति युगपत् सर्व्वे पादयोर्मूर्द्धभिर्नताः ।
प्रसादं कम्प्रमाणाश्च योगस्यान्तरविग्रतः । बहुप्रकारं कथयन् नृत्यन्ति च रमन्ति च ।
एभिर्व्विकारैर्ब्बहुभिर्निरुद्धैश्चैव सर्व्वशः । ध्रुवमैश्वर्य्यमायाय सिद्धो भवति ब्राह्मणः । ११०७०
तदर्चिष इवाग्नेया आदित्यस्येव रश्मयः । तेजोरूपकमैश्वर्य्यं जातास्ते जलविन्दवः ।
ज्योतींषि चैव संवृत्ता आकाशे गुणसंवृताः । चरन्ति सततं लोके सूर्य्याचन्द्रमसोर्गतिं ।
चन्द्रसूर्य्यात्मकं दिव्यं ज्योतिर्ग्रहगणमुत्तमं । एतद्विराजते लोके कालचक्रं ध्रुवश्चरत् ।
अर्द्धमासास्च मासाश्च ऋतुः संवत्सराश्च । क्षणा लवा मुहूर्त्ताश्च कलाः काष्ठास्तथैव च ।
अहोरात्रप्रमाणञ्च निमेषोन्मेषणं तथा । ताराणां गतयश्चैव ग्रहाणाञ्च विशेषतः । ११०७५
अथ पार्थिवमैश्वर्य्यं विकारयत्तसंभवं । योगयुक्तास्तभिण्स्ताः पात्यन्ते ह्यचलासनात् ।
अलोभाच्छिद्यते लोके वेपमानोऽनुकीर्त्त्यते । सीदते वसुधामध्ये भिद्यमानः पुनः पुनः ।
भूतानां बहुरूपैश्च अन्यैश्च तत्त्ववादिभिः । विषयैर्युज्यते क्षिप्रं संक्षेपात् संप्रबध्यते ।
ततः पार्थिवमैश्वर्य्यं सेवमानश्च सर्व्वतः । मूर्त्तिमद्भिश्च बहुधा धातुभिः स च हन्यते ।
शक्तितोमरनिस्त्रिंशैर्गदाभिश्चाप्यनेकधा । असिभिः पात्यते चैव क्षुरधारैः सहस्रशः । ११०८०
भिद्यते चैव वाणाग्रैः सुतीक्ष्णैर्म्मर्म्मभेदिभिः । एभिर्व्विकारैर्निवृत्तैर्निरुद्धैश्चैव सर्व्वशः ।
ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति ब्राह्मणः । ततः पार्थिवमैश्वर्य्यं निर्मुक्तस्य विकारतः ।
प्रादुर्भवति युञ्जाने समाधौ प्रलयक्रते । दिव्यं तद्गन्धमाघ्राय दिव्यार्थांस्तान् शृणोति च ।
दिव्यरूपैश्च विविधैश्छिद्यते न च भिद्यते । गच्छन् प्रकृतिना चान्तः प्रधानात्मा चरन्निव ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥
॥ वैशम्पायन उवाच ॥ ततोऽन्यां धारणां गत्वा मनसा स पितामहः । ब्रह्मकर्म्मसमारब्धनिर्युक्तेनान्तरात्मना । ११०८५
सर्व्वाङ्गधारणां कृत्वा मनसा प्रहसन्निव । ब्रह्मयोगेण योगज्ञः सृजते मनसा प्रजाः ।
चक्षुषो रूपसम्पन्ना ह्यप्सराः सृजते प्रभुः । नासिकायाश्च गन्धर्व्वान् शुचिचाम्बरवाससः ।
तुम्बुरुप्रमुखान् सर्व्वान् शतशोऽथ सहस्रशः । नृत्यवादित्रकुशलान् कुशलान् सामगीतिषु ।
ब्रह्मयोगेण योगज्ञः स्वयम्भूर्भगवान् प्रभुः । चारुनेत्रां सुकेशान्तां सुभ्रूश्चारुनिभाननां ।
पद्मेन शतपत्रेण चारुणा च विराजितां । धर्म्यां शुद्धचिंगिरं सेव्यां ब्राह्मीं मूर्त्तिमतीं श्रियं । ११०९०
असृजन्मनसा ब्रह्मा सम्यक् प्रोक्तेन चेतसा । भावयोगेन भूतात्मा सर्व्वप्राणभृतां ततः ।

चक्षुषो रूपसम्पन्नाः सृजन् सोऽप्सरसः प्रभुः। नासिकायाश्च गन्धर्व्वान् सुवाचः सुप्रवादितान्।
गानप्रभावं संचक्रे गन्धर्व्वाणां विशेषतः। अन्येषाञ्चैव विप्राणां गानं ब्रह्मप्रकाशितं।
पद्भ्यां सृजति भूतानि गतिमन्ति ध्रुवाणि च। नरकिन्नरयक्षांश्च पिशाचोरगराक्षसान्।
गजान् सिंहांश्च व्याघ्रांश्च मृगांश्चैव सहस्रशः। तृणजातीश्च बहुधा भावहेतोश्चतुष्पदान्। ११७९५
ये तु हस्तान्निखादन्ति कर्म्मप्राप्तेन हेतुना। हस्तेभ्यः कर्म्म ससृजे मन्तव्यं मनसा तथा।
पायुना स विसर्गञ्च भूतानां सुखमिच्छतां। उपस्थाने तथानन्दं पञ्चेन्द्रियसमाधिना।
हृदयादसृजद्धा वै बाहुभ्यां पक्षिणस्तथा। अङ्गानि चैव सत्त्वानि वेशैस्तैस्तैः पृथग्विधैः।
ऋषिं त्वङ्गिरसञ्चैव मुनिं ज्वलिततेजसं। ब्रह्मवंशकरं दिव्यं व्यतिरिक्तषडिन्द्रियं।
भ्रुवोऽन्तरे जनयते योगाद्योगेश्वरः प्रभुः। ब्रह्मवंशकरं दिव्यं भृगुं परमधार्म्मिकं। ११८००
ललाटमध्यादसृजन्नारदं प्रियविग्रहं। सनत्कुमारं मूर्द्ध्नश्च महायोगी पितामहः।
अभिषिच्य तु सोमञ्च यौवराज्ये पितामहः। ब्राह्मणानाञ्च राजानं शाश्वतं रजनीचरं।
तपसा महता युक्तो ग्रहैः सह निशाकरः। चचार नभसो मध्ये प्रभाभिर्भासयन् जगत्।
स गात्रैर्भगवान् योगात् मनसा सिद्धिमागतः। सृष्टवान् सर्व्वभूतानि स्थावराणि चराणि च।
तत्र स्थानानि भूतानां योगांश्चैव पृथग्विधान्। व्यधत्त शतशो ब्रह्मा सर्व्वभूतपितामहः। ११८०५
एव ब्रह्ममयो यज्ञो योगः सांख्यश्च तत्त्वतः। विज्ञानञ्च स्वभावश्च क्षेत्रं क्षेत्रज्ञ एव च।
एकत्वञ्च पृथक्त्वञ्च सम्भवं निधनं तथा। कालः कालत्रयश्चैव ज्ञेयो विज्ञानमेव च।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे दशाधिकद्विशतोऽध्यायः॥ २१०॥
॥ जनमेजय उवाच ॥ श्रुतं ब्रह्मयुगं ब्रह्मन् युगानां प्रथमं युगं। क्षत्रस्यापि युगं ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः।
ससंक्षेपं सविस्तारं नियमैर्व्वहुभिश्चितं। उपायज्ञैश्च कथितं क्रतुभिश्चोपशोभितं।
॥ वैशम्पायन उवाच ॥ एतत्ते कथयिष्यामि यज्ञकर्म्मभिरर्च्चितं। दानधर्म्मैश्च विविधैः प्रजाभिरुपशोभितं। ११८१०
तेऽङ्गुष्ठमात्रा मुनय आदत्ताः सूर्य्यरश्मिभिः। मोक्षप्राप्तेन विधिना निराबाधेन कर्म्मणा।
प्रवृत्ते चाप्रवृत्ते च नित्यं ब्रह्मपरायणाः। परायणस्य सङ्गम्य ब्रह्मणस्तु महीपते।
शीवृत्ताः पावनाश्चैव ब्राह्मणाश्च महीपते। चारितब्रह्मचर्य्याश्च ब्रह्मज्ञानेन बोधिताः।
पूर्णे युगसहस्रान्ते प्रभावे प्रलयं गताः। ब्राह्मणा वृत्तसम्पन्ना ज्ञानसिद्धाः समाहिताः।
व्यतिरिक्तेन्द्रियो विष्णुर्योगात्मा ब्रह्मसम्भवः। दक्षः प्रजापतिर्भूत्वा सृजते विपुलाः प्रजाः। ११८१५
अक्षराद्ब्राह्मणाः सौम्याः क्षरात् क्षत्रियबान्धवाः। वैश्या विकारतश्चैव शूद्रा धूमविकारतः।
श्वेतलोहितकैर्वर्णैः पीतैर्नीलैश्च ब्राह्मणाः। अभिनिर्व्वर्त्तिता वर्णाश्चिन्तयानेन विष्णुना।
ततो वर्णत्वमापन्नाः प्रजा लोके चतुर्व्विधाः। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महीपते।
एकलिङ्गाः पृथग्धर्म्मा द्विपादाः परमाद्भुताः। यातनयाऽभिसम्पन्ना गतिज्ञाः सर्व्वकर्म्मसु।
त्रयाणां वर्णजातानां वेदप्रोक्ताः क्रियाः स्मृताः। तेन ब्राह्मणयोगेन वैष्णवेन महीपते। ११८२०

प्रज्ञया तेजसा योगात्तस्मात् प्राचेतसः प्रभुः। विष्णुरेव महायोगी कर्म्मणामन्तरं गतः।
ततो निर्व्वाणसंभूताः शूद्राः कर्म्मविवर्ज्जिताः। तस्मान्नार्हन्ति सत्कारं न ह्यत्र ब्रह्म विद्यते।
यथाऽग्नौ धूमसंघातो ह्यरण्या मथ्यमानया। प्रादुर्भूतो विसर्पन् वै नोपयुज्यति कर्म्मणि।
एवं शूद्रा विसर्पन्तो भुवि कार्त्स्न्येन जन्मना। नासंस्कृतेन धर्म्मेण वेदप्रोक्तेन कर्म्मणा।
ततोऽन्ये दक्षपुत्रास्तु सम्भूता ब्रह्मयोनयः। बलवन्तो महोत्साहा महावीर्य्या महौजसः। ११८२५
पित्रा प्रोक्ता महात्मानो दक्षेणायज्ञकर्म्मणा। अन्तमिच्छाम्यहं श्रोतुं धात्र्याः पुत्राऽवलो ह्यहं।
ततो विधास्ये तत्त्वज्ञः प्रजानां विपुलं बलं। चेत्राणां विपुलत्वाद्धि ममापि विपुलाः प्रजाः।
न तेषां दर्शयद्देवी चक्षुषा रूपमात्मनः। प्रजापतिसुतानां वै विपुला मानमिच्छतां।
आत्मनो भावनिर्वृत्ते भाव्ये कृतयुगे तदा। जनित्री सर्व्वभूतानामण्डजानुद्भिज्जांस्तथा।
संवेदजननी धात्री चेति माता प्रचोदिता। अनुतां तनुताश्चैव जन्तूनां कर्म्मभोगिनां। ११८३०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे एकादशाधिकद्विशततोऽध्यायः॥ २११॥
॥ जनमेजय उवाच॥ साध्वहं श्रोतुमिच्छामि चेतायां ब्राह्मणोत्तम। यं ज्ञात्वा सर्व्वविद्यानां परं पश्येयमव्यय।
॥ वैशम्पायन उवाच॥ दक्षस्तु पुरानलम्भ्य स्त्रीभावं पुरुषोत्तमः। योगाद्योगेश्वरात्मानं निशक्तो गिरिमूर्द्धनि।
सुजानुः पीनजघना सुभ्रूः पद्मनिभानना। रक्तान्तनयना कान्ता सर्व्वभूतमनोरमा।
दक्षः प्राचेतसस्तस्यां कन्यायां जनयत् प्रभुः। देहाद्धि योगविधिना कन्याः पद्मनिभाननाः।
दक्षः पुरुषरूपेण स्त्रीरूपमपहाय च। दर्शने सर्व्वभूतानां कान्तः कान्ततरोऽभवत्। ११८३५
ताः कन्याः प्रददौ दक्षः स्वयं प्राचेतसः प्रभुः। ब्रह्मदेयेन विधिना ब्रह्मप्राशेन भारत।
प्रददौ दश धर्म्माय कश्यपाय त्रयोदश। सप्तविंशति सोमाय पत्नीहेतोः समाहितः।
दक्षो दत्त्वाऽथ ताः कन्याः ब्रह्मक्षत्त्रं प्रपद्य च। ब्रह्मणाऽध्युषितं पुण्यं समाहितमना मुनिः।
तप्यमानो मृगैः सार्द्धं चचार वसुधां नृप। तृणमूलफलैर्वृद्धो वृद्धश्च तपसा सकृत्।
मृगास्तु तस्य चरितं फलं मोदन्ति ब्राह्मणाः। दीक्षिताः पुण्यकर्म्माणस्तपसा दग्धकिल्बिषाः। ११८४०
संग्रामकाले कालज्ञः शस्त्रिनाद्रियते मुनिः। कर्म्म यज्ञकृतां तात सिद्धिं पश्यति सचणां।
दानमानप्रवीराश्च निरुद्वेगा निरामिषाः। मृगैः सह जरां यान्ति सपत्नीकाः सपुत्त्रिणः।
ब्राह्मणास्तोत्रसंसिद्धा अनित्ये प्रथमे पदे। ब्राह्मणाऽध्युषितत्वाच्च ब्रह्मक्षेत्रमिहोच्यते।
यतिभिः कर्म्मभिर्युक्तैर्ज्जितक्रोधैर्ज्जितेन्द्रियैः। चरद्भिर्व्वसुधां विप्रैरकिञ्चनपथैर्विभिः।
या प्रजा पूर्व्वमारूढा मानसी ब्रह्मचारिणी। शैवैषा व्यक्तमापन्ना स्वभावदुरतिक्रमा। ११८४५
अव्यक्ता व्यक्तमापन्ना स्वभावदुरतिक्रमा। व्यक्ताव्यक्तं गमित्वैषां कालधर्म्मान्महोपते।
स्थावरा जङ्गमाश्चैव स्थूलाः सूक्ष्माश्च भारत। कालयोगेन कालज्ञा भवन्ति न भवन्ति च।
एतास्चैताः प्रजाः सर्व्वा दक्षकन्यासु जज्ञिरे। कश्यपेनाव्ययेनेह संयुक्ताः कालधर्म्मणा।

आदित्या वसवो रुद्रा विश्वे च समरुद्गणाः । नागाश्चानेकशिरसः साध्या वै पन्नगास्तथा ।
गन्धर्व्वाः किन्नरा यक्षाः सुपर्णाश्च तथाऽपरे । गरुत्मान् सह पक्षैश्च किन्नराश्च सुवासमः । ११८५०
गावः पशुगणैः सार्द्धं नराश्च वसुधाधिप । धाराधराश्च वसुधाधातारश्च धराधराः ।
गजाः सिंहाश्च व्याघ्राश्च हयाः पक्षधरास्तथा । खड्गा विषाणिनश्चैव वृषभाश्च मृगास्तथा ।
चतुर्व्विषाणा नागेन्द्राः पद्माभा वर्णतः शुभाः । सर्व्वलक्षणसम्पन्नाः प्राणिनः कामरूपिणः ।
तथारूपैस्तथागात्रैस्तैः शीलैस्तैः पराक्रमैः । मुनयः पुनरुद्भूता धर्म्मक्षेत्रे सनातने ।
सैत्रशमनवो लोके धर्म्मिणो वेदगोचराः । यथोद्भूताः सुराः सर्व्वे दिवि लोके प्रतिष्ठिताः । ११८५५
ये चान्ये तपसा सिद्धा गृहस्था मनुजाधिप । ब्रह्मचर्य्येण संसिद्धाः परिचर्य्यागता गुरोः ।
ये च योगगतिं प्राप्ताः सिद्धिहेतोर्महीपते । क्लेशाधिकैः कर्म्मजन्यैर्वृत्तिं लभन्ति वै द्विजाः ।
शिलोञ्छवृत्तयः शान्ताः सपत्नीका दृढव्रताः । सर्व्वे लेते दिवि चरा भवन्ति चरितव्रताः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे द्वादशाधिकद्विशततोऽध्यायः ॥ २१२ ॥
॥ वैशम्पायन उवाच ॥ पितामहं पुरस्कृत्य मेरुपृष्ठे समाहिताः । जटाजिनधरा विप्रास्त्यक्तक्रोधा जितेन्द्रियाः ।
पर्व्वतान्तरसंसिद्धे बहुपादपसंवृते । धातुसंरञ्जितशिले समे निस्तृणकण्टके । ११८६०
त्रयाणां ब्रह्मवेदानां पञ्चस्वरविराजिते । मन्त्रयज्ञपरा नित्यं नित्यं ब्रह्महिते रताः ।
एकमेवाग्निमाधाय सर्व्वे ब्राह्मणपुङ्गवाः । विभिदुर्मन्त्रविषयैः सुसमाहितमानसाः ।
त्रिधा प्रणीता ज्वलना मुनिभिर्व्वेदपारगैः । अतस्त्रेतात्वमापन्नो यदेकस्त्रिविधः कृतः ।
एक एव महानग्निर्द्दविधा संप्रवर्द्धते । स्वाहाकारेण धर्म्मज्ञ मन्त्राणां कार्य्यसिद्धये ।
स्वयञ्च दक्षः सम्प्राप्तो भगवान् भूतसत्कृतः । ब्रह्मा ब्राह्मणनिर्म्माता सर्व्वभूतपितामहः । ११८६५
दण्डी चर्म्मी शरी खड्गी शिखी पद्मनिभाननः । अभवद्व्यस्तसन्तापो जितक्रोधो जितेन्द्रियः ।
यजते पुष्करे ब्रह्मा मेधया सह सङ्गतः । इन्द्रप्रोक्तानि सामानि गीयन्ते ब्रह्मवादिभिः ।
घृतं क्षीरं यवा व्रीहिः सर्व्वं परमकं हविः । वेदप्रोक्तं मखे न्यस्तं कल्पितं ब्रह्मणः पदे ।
निर्म्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थितां । स ब्रह्मा प्रथमं तस्मिन्नग्निमन्थ्य प्रवर्त्तयत् ।
न ह्यन्यदभिहितं द्रव्यं यथाऽग्निर्यज्ञकर्म्मणि । प्रवर्त्तते विभागैर्व्वा हुतहव्यमयं बलं । ११८७०
फलानि तैः प्रयुक्तानि हवींषि विततेऽध्वरे । प्रयुञ्जते विशेषज्ञा मुनयो ब्रह्मवादिनः ।
पद्माग्रे चतुरो वेदान् संप्रभाषद्बृहस्पतिः । ब्रह्मघोर ब्रह्मणो यज्ञे परया ब्रह्मसम्पदा ।
शिक्षाक्षरसमेताया मधुरायाः समन्ततः । सानुस्वरितरागायाः सरस्वत्याः प्रभाषते ।
तेन ब्राह्मणशब्देन ब्रह्मप्रोक्तेन भारत । विभाति स मखो व्यक्तं ब्रह्मलोक इवापरः ।
मुखैर्ब्रह्मा मखोत्तीर्णो ब्रह्मशब्दैरनामयैः । प्रयोगैः सम्प्रयुक्तैश्च जल्पन्निव प्रवर्त्तते । ११८७५
समिद्भिः सोमकलशैः पात्रैश्च बहुविस्तरैः । यवैर्व्रीहिभिराज्यैश्च पूर्णैश्च जलभाजनैः ।

क्रमप्राप्तैश्च पशुभिः कर्म्मभिश्च परान्वितैः। गोभिः पयस्विनीभिश्च पारिवत्सैश्च कोमलैः।
ब्रह्मवृद्धो वयोवृद्धस्तपोवृद्धश्च भारत। ब्रह्मज्ञानमयो देवो विद्यया सह सङ्गतः।
मानसैश्च क्रियामूर्त्ता ये च भूताः स्वयं नृप। ब्रह्मा जुहोति तांस्तस्मान्मरुद्भिः सहितस्तदा।
तेजोमूर्त्तिधरैरूपैर्न च तत्कर्म्मणाऽस्पृशत्। वेदप्रोक्तेन विधिना सर्व्वप्राणभृतां नृप। ११८८०
निर्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थितं। यजते क्रतुना पूर्व्वमग्निष्टोमेन स प्रभुः।
सदस्यैस्तत्सदो व्यक्तं शुशुभे यज्ञकर्म्मणि। जल्पन्ते मधुरा वाचः सानुस्वारक्रियास्ततः।
कर्म्मभिश्च तपोयुक्तैर्वेदवेदाङ्गपारगैः। सूर्य्येन्दुसदृशैराजन् विरराज महाक्रतुः।
ब्रह्मघोषेण महता ब्रह्मवास इवापरः। वसुधामिह संप्राप्तैः सर्व्वैरेव दिवौकसैः।
वेदवेदाङ्गविद्भिश्च विनीतैर्ब्रह्मवादिभिः। गतागतैस्तपःश्रान्तैः स्वर्गलोके महीयते। ११८८५
ज्वलद्भिरिव विप्रैस्तैस्त्रिभिरेवाध्वरेऽग्निभिः। ब्रह्मलोक इवाभाति ब्रह्मणः स महाक्रतुः।
इन्द्रप्रोक्तानि सामानि गायन्ति ब्रह्मवादिनः। वचनानि प्रयुक्तानि यजूंषि विततेऽध्वरे।
तपःश्रान्ता ब्रह्मपराः सत्यव्रतसमाहिताः। श्रावयन्मुनयः सर्व्वे मनोभिः श्रोत्रवादिभिः।
होता चैवाभवद्राजन् ब्रह्मत्वे च बृहस्पतिः। सर्व्वधर्म्मविदां श्रेष्ठः पुराणो ब्रह्मसम्भवः।
यजमानस्य यज्ञान्ते विष्णोः पूजां प्रयुज्य च। अदित्याः पश्चिमे गर्भे तपसा संवृते नृप। ११८९०
पदं विष्णुरजो ब्रह्मा निर्द्वन्द्वो निष्परिग्रहः। यतः पदसहस्राणि भविष्यन्त्युद्भवन्ति च।
अवध्यस्याप्रमेयस्य व्यतिरिक्तस्य कर्म्मभिः। आत्माऽपि यस्य मुनयो भवन्ति निष्परिग्रहाः।
परिग्रहाश्च विषया दोषप्राप्ता महीपते। दोषाश्च युगपत् सर्व्वे छादयन्ति मनो बलात्।
इन्द्रियग्रामविषये चरन्तो निष्परिग्रहाः। परिग्रहं शुभं धर्म्ममविद्यालक्षणं विदुः।
विद्यालक्षणसंयोगाच्च मनस्त्याद्यते नृप। यदि चेन्मुनिशब्देन दृश्यते ब्रह्मवादिभिः। ११८९५
वेदविद्याव्रतस्नातैर्नियतैः कुरुसत्तम। दिवि लोकः सतां स्थानं लोकानां लोक उच्यते।
यत्र देवा हव्ययुक्ता न क्षयं यान्ति भारत। यजमानस्य भोगैः स्वैः कर्म्मप्राप्तोऽक्षते पदे।
मोदते सह पत्नीभिर्विज्वरो वसुधाधिप। यज्ञावसाने शैलेन्द्रं द्विजेभ्यः प्रददौ विभुः।
दयया सर्व्वभूतानां निर्म्मलेनान्तरात्मना। ते शैलसर्व्वगात्राणि परस्परविशेषिणः।
न शेकुः प्रविभागार्थं भेत्तुं सर्व्वौघमैरपि। ततस्ते ब्राह्मणगणा निषेदुर्वसुधातले। ११९००
श्रमेणाभिहताः सर्व्वे विवर्णवदना नृप। सुपार्श्वो गिरिमुख्यस्तु वाग्भिर्मधुरभाषिताः।
अब्रवीत् प्रणतः सर्व्वाञ्छिरसा तान् द्विजोत्तमान्। न हि शक्यो बलाद्भेत्तुं युष्माभिरसुसङ्गिभिः।
अपि वर्षशतैर्द्दिव्यैः परस्परविरोधिभिः। एकीभूता यदा सर्व्वे भविष्यथ समाहिताः।
अविरोधेन युगपद्विभजिष्यथ निर्वृताः। बलं हि रागदोषाभ्यां वर्द्धते ब्रह्मसत्तमाः।
विमुक्तं रागदोषाभ्यां ब्रह्म वर्द्धति शाश्वतं। यदाऽहं भेदयिष्यामि स्वर्गं भिन्नैः शिलातलैः। ११९०५
धातुभिश्च विवर्णैश्च शिखरैश्चावपातितैः। विशीर्णैः पार्श्वविवरैर्नागैश्चागलितैर्भुवि।

बहुभिर्व्यासरूपैश्च चोद्यमनो गुहाशयैः। प्रतिगृह्य च तद्वाक्यं शैलेन्द्रस्य सुभाषितं।
तूष्णीम्बभूवुस्ते सर्व्वे तदा ब्राह्मणसत्तमाः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पैष्करे त्रयोदशाधिकद्विशततोऽध्यायः ॥ २१३ ॥
॥ वैशम्पायन उवाच ॥ बलिहोमाश्च वर्द्धन्ते ग्रहन्यहनि भारत। द्विजानां तपसाढ्यानां गृहधर्म्मेषु तिष्ठतां।
देवताद्याश्च पूज्यन्ते तदाप्रभृति भारत। तेषां ब्रह्मविदां राजन् पृथिव्यां ब्रह्मवादिभिः। ११९१०
तत्रैव ब्रह्मसदने समे निस्तृणकण्टके। प्राच्येन्धनतृणे देशे पुण्ये पर्व्वतरोधसि।
वासं यत्र प्रकुर्व्वन्ति दृष्ट्वा भगवतः क्रियां। तपोऽर्थिनो महाभागा ब्रह्मचर्य्यव्रते स्थिताः।
गृहस्थधर्म्मे निरता दानप्राप्तेन चेतसा। मुनयश्चापि काङ्क्षन्ति धर्म्मेण हविकाङ्क्षिणः।
अन्ये कर्म्मफले चैव रता ब्राह्मणपुङ्गवाः। अग्निहोत्रव्रतस्नाता जितक्रोधाः समाहिताः।
दैवयुक्तेन चायुक्ताः कर्म्मणा ब्रह्मसत्तमाः। चीरवल्कलसंवीता नियता नियतेन्द्रियाः। ११९१५
चरन्तो ब्रह्मचर्य्यञ्च यत्नमास्थाय दारुणं। अनेन विधिना राजन् क्रमप्राप्तेन सर्व्वशः।
क्रमाद्यो वेद संस्कारं पुण्यं प्राप्ताः सनातनं। पूर्व्वैराचरितं राजन् मुनिभिर्ब्रह्मवादिभिः।
अवेदविद्यो नागच्छेन्नापि रौद्रं व्रतञ्चरेत्। न च त्यागेन गच्छेत गृहधर्म्मञ्च न त्यजेत्।
एतन्न गच्छेदध्वानमप्राप्तो वेदसञ्चयं। ऋचश्च यजुषः सर्व्वाः सामगानञ्च भारत।
ये चापि पुत्त्रिणो न स्युः श्रुत्वाऽप्यप्राप्नुयुः फलं। ब्राह्मणास्तु तपःश्रान्ता परिचर्य्यागता गुरोः। ११९२०
यस्य नैवं श्रुतं ब्रह्म न गृहीतं विशाम्पते। कामं तं धार्म्मिको राजा दासकर्म्माणि कारयेत्।
अथवा नैव विद्येत यो ब्रह्म नाद्रियेद्द्विजः। श्रोत्रादीनामविषये मनः पूर्व्वं समाहरेत्।
एवं सर्व्वेन्द्रियारम्भं वेदपूर्व्वं समाचरेत्। ब्राह्मणो भूतिसम्पन्नो य इच्छेद्भूतिमात्मनः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे चतुर्द्दशाधिकद्विशततोऽध्यायः ॥ २१४ ॥
॥ वैशम्पायन उवाच ॥ ते तु गोब्राह्मणानाञ्च चन्द्रादित्यपुरस्कृताः। ब्राह्मणान् पूजयन्राजन् वसुभिर्ब्रह्मसम्भवैः।
नारदप्रमुखाश्चैव गन्धर्व्वा ऋषयो नृप। कुर्व्वन्ति सततं यज्ञैः क्रमप्राप्तं पितामहं। ११९२५
वचोभिर्म्मधुराभाषैः पञ्चेन्द्रियनिवासिभिः। सर्व्वभूतप्रियकरैः सर्व्वभूतहितैषिभिः।
स्तूयमानश्च यज्ञान्ते पञ्चेन्द्रियसमाहितैः। प्रोवाच भगवान् ब्रह्मा दिष्ट्या दिष्ट्येति भारत।
ततः कश्यपमाभाष्य प्रोवाच भगवान् प्रभुः। भवानपि सुतैः सार्द्धं यक्ष्यते वसुधातले।
क्रतुभिः परमप्राप्तैः संपूर्णवरदक्षिणैः। बलासुराश्च ते सर्व्वे यथाप्रतिगुणैः प्रभो।
वयं यक्ष्यामहे सर्व्वे पूर्व्वं यक्ष्यामहे वयं। एवमन्योन्यसंरम्भाद्क्षिपन्ते बलदर्पिताः। ११९३०
दैतेयाश्चाप्यदैतेयाः परस्परजयैषिणः। युद्धायैव प्रतिष्ठन्ति प्रगृह्य विपुलौ भुजौ।
निवार्य्यमाणा ऋषिभिस्तपसा दग्धकिल्बिषैः। अन्यैश्च बहुभिर्व्विप्रैर्व्वेदवेदाङ्गपारगैः।
निवार्य्यमाणा युध्यन्ते वृषभा इव गोकुले। प्रयुद्धारम्भसंक्रान्ताः सर्व्वप्राणैर्जयैषिणः।
पश्यतां सर्व्वभूतानां मृत्योर्व्विषयमागताः। ततः शब्देन महता परं कृत्वा महाबलाः।

परापरज्ञस्तपरो नाभिमानादुदीरितः। अपरज्ञः परां बुद्धिं ज्ञात्वा मोहाद्विमुच्यते।
अदर्शनादपि ततः पुनश्चादर्शनं गतः। नाहं तं वेद्मि नासौ मां न च मेऽस्ति विरागता।
येन येन शरीरेण करोत्ययमनीश्वरः। तेन तेन शरीरेण तदवश्यमुपाश्नुते।
मानसं मनसाप्नोति शारीरञ्च शरीरवान्।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि चतुस्त्रिंशोऽध्यायः॥ ३४॥
॥ वैशम्पायन उवाच॥ अदृष्ट्वा तु नृपः पुत्रान् दर्शनं प्रतिलब्धवान्। ऋषेः प्रसादात् पुत्राणां स्वरूपाणां कुरूद्वह।
स राजा राजधर्म्मांश्च ब्रह्मोपनिषदन्तदा। अवाप्तवान्नरश्रेष्ठो बुद्धिनिश्चयमेव च।
विदुरश्च महाप्राज्ञो ययौ सिद्धिं तपोबलात्। धृतराष्ट्रः समासाद्य व्यासञ्चैव तपस्विनं।
॥ जनमेजय उवाच॥ ममापि वरदो व्यासो दर्शयेत् पितरं यदि। तद्रूपवेशवयसं श्रद्दध्यां सर्व्वमेव ते।
प्रियं मे स्यात् कृतार्थश्च स्यामहं कृतनिश्चयः। प्रसादादृषिमुख्यस्य मम कामः समृध्यतां।
॥ सौतिरुवाच॥ इत्युक्तवचने तस्मिन्नृपे व्यासः प्रतापवान्। प्रसादमकरोद्धीमानानयच्च परिक्षितं।
ततस्तद्रूपवयसमागतं नृपतिं दिवः। श्रीमन्तं पितरं राजा ददर्श जनमेजयः।
शमीकञ्च महात्मानं पुत्त्रन्तञ्चास्य शृङ्गिणं। अमात्या ये बभूवुश्च राज्ञस्तांश्च ददर्श ह।
ततः सोऽवभृथे राजा मुदितो जनमेजयः। पितरं स्नापयामास स्वयं सस्नौ च पार्थिवः।
स्नात्वा स नृपतिर्व्विप्रमास्तीकमिदमब्रवीत्। यायावरकुलोत्पन्नं जरत्कारुसुतं तदा।
आस्तीक विविधाश्चर्य्यो यज्ञोऽयमिति मे मतिः। यदद्यायं पिता प्राप्तो मम शोकप्रणाशनः।
॥ आस्तीक उवाच॥ ऋषिर्द्वैपायनो यत्र पुराणस्तपसो निधिः। यज्ञे कुरुकुलश्रेष्ठ तस्य लोकावुभौ जितौ।
श्रुतं विचित्रमाख्यानं त्वया पाण्डवनन्दन। सर्पाश्च भस्मसान्नीता गतश्च पदवीं पितुः।
कथञ्चित्तक्षको मुक्तः सत्यत्वात्तव पार्थिव। ऋषयः पूजिताः सर्व्वे गतिर्दृष्टा महात्मनः।
प्राप्तः स विपुलो धर्म्मः श्रुत्वा पापविनाशनं। विमुक्तो हृदयग्रन्थिरुदारजनदर्शनात्।
ये च पक्षधरा धर्म्मे सद्वृत्तरुचयश्च ये। यान् दृष्ट्वा हीयते पापं तेभ्यः कार्य्या नमस्क्रिया।
॥ सौतिरुवाच॥ एतच्छ्रुत्वा द्विजश्रेष्ठात् स राजा जनमेजयः। पूजयामास तमृषिमनुमान्य पुनः पुनः।
पप्रच्छ तमृषिञ्चापि वैशम्पायनमच्युतं। कथावशेषं धर्म्मज्ञो वनवासस्य सत्तम।
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि जनमेजयस्य पितृदर्शने पञ्चत्रिंशोऽध्यायः॥ ३५॥
॥ जनमेजय उवाच॥ दृष्ट्वा पुत्त्रांस्तथा पौत्रान् सानुबन्धान् जनाधिपः। धृतराष्ट्रः किमकरोद्राजा चैव युधिष्ठिरः।
॥ वैशम्पायन उवाच॥ तद्दृष्ट्वा महदाश्चर्य्यं पुत्त्राणां दर्शनं नृपः। वीतशोकः स राजर्षिः पुनराश्रममागमत्।
इतरस्तु जनः सर्व्वस्ते चैव परमर्षयः। प्रतिजग्मुर्य्यथाकामं धृतराष्ट्राभ्यनुज्ञया।
पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः। पुनर्ज्जग्मुर्म्महात्मानं सदारास्तं महीपतिं।
तमाश्रमपदं धीमान् ब्रह्मर्षिर्ल्लोकपूजितः। मुनिः सत्यवतीपुत्त्रो धृतराष्ट्रमभाषत।

धृतराष्ट्र महाबाहो शृणु कौरवनन्दन । श्रुतं ते ज्ञानवृद्धानामृषीणां पुण्यकर्म्मणां ।
वृद्धाभिजनवृद्धानां वेदवेदाङ्गवेदिनां । धर्म्मज्ञानां पुराणानां वदतां विविधाः कथाः ।
मास्म शोके मनः कार्षीर्दिष्टे न व्यथते बुधः । श्रुतं देवरहस्यन्ते नारदाद्देवदर्शनात् ।
गतास्ते क्षत्रधर्म्मेण शस्त्रपूतां गतिं शुभां । यथा दृष्टास्त्वया पुत्रास्तथा कामविहारिणः । ८६५
युधिष्ठिरस्त्वयं धीमान् भवन्तमनुरुध्यते । सहितो भ्रातृभिः सर्व्वैः सदारः ससुहृज्जनः ।
विसर्ज्जयैनं यात्वेष स्वराज्यमनुशासतां । मासः समधिकस्तेषामतीतो वसतां वने ।
एतद्धि नित्यं यत्नेन पदं रक्ष्यं नराधिप । बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम कुरूद्वह ।
इत्युक्तः कौरवो राजा व्यासेनातुलतेजसा । युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत् ।
अजातशत्रो भद्रन्ते शृणु मे भ्रातृभिः सह । त्वत्प्रसादान्महीपाल शोको नास्मान् प्रबाधते । ८७०
रमे चाहं त्वया पुत्र पुरेव गजसाह्वये । नाथेनानुगतो विद्वान् प्रियेषु परिवर्त्तिना ।
प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्म्मे परमा त्वयि । न मे मन्युर्म्महाबाहो गम्यतां पुत्र मा चिरं ।
भवन्तञ्चेह सम्प्रेक्ष्य तपो मे परिहीयते । तपोयुक्तं शरीरञ्च तं दृष्ट्वा धारितं मनः ।
मातरौ ते तथैवेमे शीर्णपर्णकृताशने । मम तुल्यव्रते पुत्र न चिरं वर्त्तयिष्यतः ।
दुर्य्योधनप्रभृतयो दृष्टा लोकान्तरं गताः । व्यासस्य तपसो वीर्य्याद्भवतश्च समागमात् । ८७५
प्रयोजनन्तु निर्वृत्तं जीवितस्य ममानघ । उग्रं तपः समास्थास्ये त्वमनुज्ञातुमर्हसि ।
त्वय्यद्य पिण्डः कीर्त्तिश्च कुलञ्चेदं प्रतिष्ठितं । श्वो वाऽद्य वा महाबाहो गम्यतां पुत्र मा चिरं ।
राजनीतिः सुबहुशः श्रुता ते भरतर्षभ । सन्देष्टव्यं न पश्यामि कृतं मे भवता प्रभो ।
॥ वैशम्पायन उवाच ॥ इत्युक्तवचनन्तन्तु नृपो राजानमब्रवीत् । न मामर्हसि धर्म्मज्ञ परित्यक्तुमनागसं ।
कामं गच्छन्तु मे सर्व्वे भ्रातरोऽनुचरास्तथा । भवन्तमहमन्विष्ये मातरौ च यतव्रतः । ८८०
तमुवाचाथ गान्धारी मैवं पुत्र शृणुष्व च । त्वय्यधीनं कुरुकुलं पिण्डश्च श्वशुरस्य मे ।
गम्यतां पुत्र पर्य्याप्तमेतावत् पूजिता वयं । राजा यदाह तत् कार्य्यं त्वया पुत्र पितुर्व्वचः ।
॥ वैशम्पायन उवाच ॥ इत्युक्तः स तु गान्धार्य्या कुन्तीमिदमभाषत । स्नेहबाष्पाकुले नेत्रे प्रमृज्य रुदतीं वचः ।
विसर्ज्जयति मां राजा गान्धारी च यशस्विनी । भवत्यां बद्धचित्तस्तु कथं यास्यामि दुःखितः ।
न चोत्सहे तपोविघ्नं कर्त्तुं ते धर्म्मचारिणि । तपसो हि परं नास्ति तपसा विन्दते महत् । ८८५
ममापि न तथा राज्ञि राज्ये बुद्धिर्यथा पुरा । तपस्येवानुरक्तं मे मनः सर्व्वात्मना तथा ।
शून्येयञ्च मही कृत्स्ना न मे प्रीतिकरी शुभे । बान्धवा नः परिक्षीणा बलं नो न यथा पुरा ।
पाञ्चालाः सुभृशं क्षीणाः कथामात्रावशेषिताः । न तेषां कुलकर्त्तारं कञ्चित् पश्याम्यहं शुभे ।
सर्व्वे हि भस्मसान्नीतास्ते द्रोणेन रणाजिरे । अवशिष्टाश्च निहता द्रोणपुत्रेण वै निशि ।
चेदयश्चैव मत्स्याश्च दृष्टपूर्व्वास्तथैव तं । केवलं वृष्णिचक्रञ्च वासुदेवपरिग्रहात् । ८९०
यद्दृष्ट्वा स्थातुमिच्छामि धर्म्मार्थं नार्थहेतुतः । शिवेन पश्य नः सर्व्वान् दुर्लभं तव दर्शनं ।

अविपन्नश्च राजा हि तीव्रं चारप्स्यते तपः । एतच्छ्रुत्वा महाबाहुः सहदेवो युधां पतिः ।
युधिष्ठिरमुवाचेदं वाष्पव्याकुललोचनः । नोत्सहेऽहं परित्यक्तुं मातरं भरतर्षभ ।
प्रतियातु भवान् चिप्रं तपस्तप्स्याम्यहं विभो । इहैव शोषयिष्यामि तपसेदं कलेवरं ।
पादशुश्रूषणे रक्तो राज्ञो मात्रोस्तथाऽनयोः । तमुवाच ततः कुन्ती परिष्वज्य महाभुजं । ९९५
गम्यतां पुत्र मैवं त्वं वोचः कुरु वचो मम । आगमा वः शिवाः सन्तु स्वस्था भवत पुत्रकाः ।
उपरोधो भवेदेवमस्माकं तपसः कृते । त्वत्स्नेहपाशबद्धा च हीयेयं तपसः परात् ।
तस्मात् पुत्रक गच्छ त्वं शिष्टमल्पञ्च नः प्रभो । एवं संस्तम्भितं वाक्यैः कुन्त्या बहुविधैर्म्मनः ।
सहदेवस्य राजेन्द्र राज्ञश्चैव विशेषतः । ते मात्रा समनुज्ञाता राज्ञा च मुनिपुङ्गवाः ।
अभिवाद्य कुरुश्रेष्ठमामन्त्रयितुमारभन् । १०००
॥ युधिष्ठिर उवाच ॥ राज्यं प्रति गमिष्यामः शिवेन प्रतिनन्दिताः । अनुज्ञातास्त्वया राजन् गमिष्यामो विकल्मषाः ।
एवमुक्तः स राजर्षिर्द्धर्म्मराज्ञा महात्मना । अनुजज्ञे स कौरव्यमभिनन्द्य युधिष्ठिरं ।
भीमञ्च बलिनां श्रेष्ठं सान्त्वयामास पार्थिवः । स चास्य सम्यङ्मेधावी प्रत्यपद्यत वीर्य्यवान् ।
अर्ज्जुनञ्च समाश्लिष्य यमौ च पुरुषर्षभौ । अनुजज्ञे स कौरव्यः परिष्वज्याभिनन्द्य च ।
गान्धार्य्या चाभ्यनुज्ञाताः कृतपादाभिवादनाः । जनन्या समुपाघ्राताः परिमुक्ताश्च ते नृपं । १००५
चक्रुः प्रदक्षिणं सर्व्वे वत्सा इव निवारणे । पुनः पुनर्निरीक्षन्तः प्रचक्रुस्ते प्रदक्षिणं ।
द्रौपदीप्रमुखाश्चैव सर्व्वाः कौरवयोषितः । न्यायतः श्वशुरे वृत्तिं प्रयुज्य प्रययुस्ततः ।
श्वश्रूभ्यां समनुज्ञाताः परिष्वज्याभिनन्दिताः । सन्दिष्टाश्चेतिकर्त्तव्यं प्रययुर्भर्त्तृभिः सह ।
ततः प्रजज्ञे निनदः सूतानां युज्यतामिति । उष्ट्राणां क्रोशताञ्चापि हयानां हेषतामपि ।
ततो युधिष्ठिरो राजा सदारः सहसैनिकः । नगरं हस्तिनपुरं पुनरायात् सबान्धवः । १०१०
इति श्रीमहाभारते आश्रमवासिके पर्व्वणि पुत्रदर्शनपर्व्वणि युधिष्ठिरप्रत्यागमने षट्त्रिंशोऽध्यायः ॥ ३६ ॥
समाप्तञ्चेदं पुत्रदर्शनपर्व्व ॥

## ॥ अथ नारदागमनपर्व्व ॥

॥ वैशम्पायन उवाच ॥ दिवर्षोपनिवृत्तेषु पाण्डवेषु यदृच्छया । देवर्षिर्न्नारदो राजन्नाजगाम युधिष्ठिरं ।
तमभ्यर्च्च्य महाबाहुः कुरुराजो युधिष्ठिरः । आसीनं परिविश्वस्तं प्रोवाच वदतां वरः ।
चिरात्र नानुपश्यामि भगवन्तमुपस्थितं । कच्चित्ते कुशलं विप्र शुभं वा प्रत्युपस्थितं ।
के देशाः परिदृष्टास्ते किञ्च कार्य्यं करोमि ते । तद्ब्रूहि द्विजमुख्यस्त्वं त्वं ह्यस्माकं परा गतिः ।
॥ नारद उवाच ॥ चिरदृष्टोऽसि मेत्येवमागतोऽहं तपोवनात् । परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप । १०१५
॥ युधिष्ठिर उवाच ॥ वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः । धृतराष्ट्रं महात्मानमास्थितं परमं तपः ।
परिदृष्टस्त्वया तत्र कुशली स कुरूद्वहः । गान्धारी च पृथा चैव सूतपुत्रश्च सञ्जयः ।

कथञ्च वर्त्तते चाद्य पिता मम स पार्थिवः। श्रोतुमिच्छामि भगवन् यदि दृष्टस्त्वया नृपः।
॥ नारद उवाच ॥ स्थिरीभूय महाराज शृणु वृत्तं यथातथं। यथाश्रुतञ्च दृष्टञ्च मया तस्मिंस्तपोवने।
वनवासनिवृत्तेषु भवत्सु कुरुनन्दन। कुरुक्षेत्रात् पिता तुभ्यं गङ्गाद्वारं ययौ नृप। १०२०
गान्धार्य्या सहितो धीमान् बध्वा कुन्त्या समन्वितः। सञ्जयेन च सूतेन साग्निहोत्रः सयाजकः।
आतस्थे स तपस्तीव्रं पिता तव तपोधनः। वीटां मुखे समादाय वायुभक्षोऽभवन्मुनिः।
वने स मुनिभिः सर्व्वैः पूज्यमानो महातपाः। त्वगस्थिमात्रशेषः स षण्मासानभवन्नृपः।
गान्धारी तु जलाहारी कुन्ती मासोपवासिनी। सञ्जयः षष्ठभक्तेन वर्त्तयामास भारत।
अग्नींस्तु याजकास्तत्र जुहुवुर्व्विधिवत् प्रभो। दृश्यतो दृश्यतश्चैव वने तस्मिन्नृपस्य वै। १०२५
अनिकेतोऽथ राजा स बभूव वनगोचरः। ते चापि सहिते देव्यौ सञ्जयश्च तमन्वयुः।
सञ्जयो नृपतेर्नेता समेषु विषमेषु च। गान्धार्य्यास्तु पृथा राजन् चक्षुरासीदनिन्दिता।
ततः कदाचिद्गङ्गायाः कच्छे स नृपसत्तमः। गङ्गायामाप्लुतो धीमानाश्रमाभिमुखोऽभवत्।
अथ वायुः समुद्भूतो दावाग्निरभवन्महान्। ददाह तद्वनं सर्व्वं परिगृह्य समन्ततः।
दह्यत्सु मृगयूथेषु द्विजिह्वेषु समन्ततः। वराहाणाञ्च यूथेषु संश्रयत्सु जलाशयान्। १०३०
समाविद्धे वने तस्मिन् प्राप्ते व्यसन उत्तमे। निराहारतया राजा मन्दप्राणविचेष्टितः।
असमर्थोऽपसरणे सुकृशौ मातरौ च ते। ततः स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात्।
इदमाह ततः सूतं सञ्जयं जयताम्वरं। गच्छ सञ्जय यत्राग्निर्न त्वां दहति कर्हिचित्।
वयमत्राग्निना युक्ता गमिष्यामः परां गतिं। तमुवाच किलोद्विग्नः सञ्जयो वदतां वरः।
राजन्मृत्युरनिष्टोऽयं भविता ते वृथाग्निना। न चोपायं प्रपश्यामि मोक्षणे जातवेदसः। १०३५
यदत्रानन्तरं कार्य्यं तद्भवान् वक्तुमर्हति। इत्युक्तः सञ्जयेनेदं पुनराह स पार्थिवः।
नैष मृत्युरनिष्टो नो निःसृतानां गृहात् स्वयं। जलमग्निस्तथा वायुरथ वाऽपि विकर्षणं।
तापसानां प्रशस्यन्ते गच्छ सञ्जय मा चिरं। इत्युक्त्वा सञ्जयं राजा समाधाय मनस्तथा।
प्राङ्मुखः सह गान्धार्य्या कुन्त्या चोपाविशत्तदा। सञ्जयस्तं तथा दृष्ट्वा प्रदक्षिणमथाकरोत्।
उवाच चैनं मेधावी युङ्क्ष्वात्मानमिति प्रभो। ऋषिपुत्रो मनीषी स राजा चक्रेऽस्य तद्वचः। १०४०
स निरुद्धेन्द्रियग्राममासीत् काष्ठोपमस्तदा। गान्धारी च महाभागा जननी च पृथा तव।
दावाग्निना समायुक्ते स च राजा पिता तव। सञ्जयस्तु महामात्रस्तस्माद्दावादमुच्यत।
गङ्गाकूले मया दृष्टस्तापसैः परिवारितः। स तानामन्त्र्य तेजस्वी निवेद्यैतच्च सर्व्वशः।
प्रययौ सञ्जयो धीमान् हिमवन्तं महीधरं। एवं स निधनं प्राप्तः कुरुराजो महामनाः।
गान्धारी च पृथा चैव जनन्यौ ते विशाम्पते। यदृच्छया ऽनुव्रजता मया राज्ञः कलेवरं। १०४५
तयोश्च देव्योरुभयोर्म्मया दृष्टानि भारत। ततस्तपोवने तस्मिन् समाजग्मुस्तपोधनाः।
श्रुत्वा राज्ञस्तदा निष्ठां न त्वशोचन् गतीश्च ते। तत्राश्रौषमहं सर्व्वमेतत् पुरुषसत्तम।

अष्टौ वर्षसहस्राणि सहस्रं शतमेव च। महायोगी महादेवो नियमाद्ब्रह्मसम्भवः।
अथ वायुर्घनीभूतो अन्ते चरति गोपतेः। फेनीभूतं समुद्वारैः पवनं निर्गिन्मुखात्।
स निष्क्रान्तस्ततो वक्त्रात् प्राणेन परमाप्तवान्। निर्यासभूतः पतितो नैवार्द्रो नैव पार्थिवः।
स फेनो वारिमाविश्य चचार वसुधातले। नैवार्द्रो नैव शुष्काङ्गो वायुः संघातमागतः। १२०५५
तत्काले फेनमुत्क्षिप्य पवनः सह वारिणा। निरालम्बे निरालम्बखभ्राणि समपद्यत।
ते क्षिपन्ति पयो भूमावात्मानं खेन घट्टिताः। नीलमेघारुणप्रख्या नैवार्द्रा नैव पार्थिवाः।
ब्राह्मीं मूर्त्तिं समाधाय वायुः सर्व्वचगो वशी। समाः सहस्रं संपूर्णं चचार विपुलं तपः।
वह्निर्व्वह्रजटी भूत्वा चीरवल्कलवासधृक्। तपस्तप्यदनाहारो मौनमास्थाय पुष्करे।
वर्षाणाञ्च सहस्राणि त्रीणि चैकञ्च यत्नतः। तस्याग्नेस्तेजःसंभूतो महानग्निः प्रवर्त्तते। १२०६०
स्वर्गप्रकाशकश्चैव स्वर्गवासी तमोनुदः। दिव्यो भूतप्रकाशाख्यस्तपसा ब्रह्मसम्भवः।
तपश्चरति धूमाग्निर्लोकानां भूतभावनः। तत्तमो भुवि राजेन्द्र मानुषेषु प्रतिष्ठितं।
भास्करस्तेजसंहारो यतो भवति सत्तम। मर्त्यानां सर्व्वभूतानां तेज आविश्य वर्त्तते।
न तु योगवले राजन् ब्राह्मणस्य विशेषतः। तत्तमो नाशयेद्राजौ नाप्यहो भविना दयं।
पुष्पमित्रो महातेजा यत्नः सर्व्वचगो वशी। तपश्चरति धर्म्मात्मा पुष्करेषु समाहितः। १२०६५
महेन्द्रशिखराह्वारा यावत्यो यान्ति मेदिनीं। तावत्स्वरूपमास्थाय तिष्ठते निखिलाः समाः।
जानुभ्यां पतितो भूमौ ज्योतिर्नभसि पश्यति। समाः सहस्रं निखिलं नेत्रैरनिमिषैर्जगत्।
नेत्राणि बहुधा तस्य नेत्रान्तैरभिनिःसृताः। मध्यं दिनकरे प्राप्ते रश्मिवान् स परिग्रहे।
ते रश्मयः प्रभानेत्रैः शतशोऽथ सहस्रशः। रराज तेजःसंयोगाज्ज्वलद्भिरिव पावकः।
सविस्फुलिङ्गैर्नेत्रान्तैरादित्यमनुवर्त्तते। कर्म्मणोऽन्ते युगान्ते वा जगतो बहुरूपिणः। १२०७०
बहुधा तु पुनर्भूत्वा निषण्णो वसुधातले। समाः सहस्रं संपूर्णं तपस्तेपे सुदारुणं।
निगृहीतेन्द्रियो भूत्वा नाप्सरोभिर्ललाम ह। मेरोः शिखरमासाद्य कामं कामेन पीडयन्।
तपःकामः स यक्षस्तु कुवेरो नरवाहनः। विष्णुरिव तपोऽभ्यवहितजयोऽन्तेन जृम्भते।
न हि कश्चित् पुमानस्ति य एतत्तप आचरेत्। त्रिषु लोकेषु राजेन्द्र ऋते विष्णुं सनातनं।
वासुकिर्व्वहुशीर्षश्च नागेन्द्रो मौनमास्थितः। तप आचरते सम्यक् निधाय मनसा मनः। १२०७५
शेषः सत्यधृतिर्नागो बलवान् ब्रह्मसम्भवः। वृक्षमारुह्य धर्म्मात्मा अवाक्शीर्षोऽवलम्बते।
जिह्वाभिर्लेलिहानाभिर्गाचजं विषमुत्सृजन्। समाःसहस्रं संपूर्णं निराहारस्तपोधनः।
कालकूटं विषं तद्धि सुमहत् समपद्यत। येन लोको ह्यभियस्तो न सुखं विन्दते नृप।
सर्व्वत्रानुगतं तीक्ष्णं भुजगेषु महीतले। जङ्गमं स्थावरश्चैव सर्व्वत्रानुगतं विषं।
परस्परं विरुद्धेन हिंसायुक्तेन भारत। नाशयत्यात्मनोऽङ्गानि तेन तीक्ष्णेन भारत। १२०८०
अथ ब्रह्मा महाभागो भूतानां हितकाम्यया। मन्त्रं विसृजते राजन् ब्रह्माचरमथं हितं।

गरुत्मान् विततैः पक्षैर्नखाग्रैः सलिलं महीं । समासहस्रं संपूर्णं मखाग्रेणावलम्बते ।
पर्णभारैश्च विकचैर्विशीर्णैर्वसुधातले । रराज वसुधा चैव तैः पर्णैर्बहुचित्रितैः ।
येन वित्तेन जीवेयुः सर्व्वभूतानि भारत । इह लोके मनुष्येन्द्र देवलोके च भारत ।
द्यौरिवाचितनक्षत्रा महीतलविसर्पिभिः । मघवान् हिमसंपाते तपत्येकचरो वशी । १२०८५
पुष्कराश्रमि धर्म्मात्मा मत्स्योल्लिखितमूर्द्धजः । अथ खतलमाक्रम्य पृथिवी मांसदेहिनी ।
तपश्चरति धर्म्मात्मा वाङ्मुखम्य दक्षिणं । सायं वर्षसहस्रञ्च शतमेकञ्च सुव्रता ।
तपश्चरति संयोगाद्वायुभक्षा समाहिता । समाधियोगात् सङ्गाद्वा ब्रह्मयोगस्य भारत ।
येनेयं पृथिवी राजन् धार्य्यते ब्रह्मयोगिना । अनाद्यन्तमनित्येन सर्व्वत्र विषयैषिणा ।
योऽसौ विष्णुरगाधात्मा परमात्मा निराकृतिः । दिनेऽनिषण्णो भवति रात्रौ भवति वै स्थिरः । १२०९०
सत्यसन्धः स धर्म्मात्मा कामकारकरोऽभवत् । तस्य यः सोद्यतः पाणिः पृथिव्यां पृथिवीसमः ।
रात्रौ तपनो भवति मण्डलं विपुलं नभः । स चन्द्रविषयं राजन्क्रमयामास रुन्धति ।
ग्रहाणां गतयश्चैव ताराणाञ्च विशेषतः । तां छायामाविशत् सोमात् स्ववह्निर्मण्डलेन वै ।
पृथिव्यां दक्षिणो हस्तो महायोगी महामनाः । सैषा छाया शशीभूता शशिमण्डलमाविशत् ।
अलिङ्गा पृथिवीलिङ्गाद्द्रुतादक्षया दिवि । अङ्गैरङ्गान्युपगुह्य तपश्चरति दुश्चरं । १२०९५
निश्चयात् प्रोक्ष्य पादौ तु पृथ्वी वाच्यमुपागता । सूर्य्यार्च्चिर्भिः पीयमानादाक्षिप्यति महीतलात् ।
महीव चाम्बुवसनाद्युगान्ते विष्णुतेजसा । रराज सूर्य्यरश्मिभिर्व्यतिषक्ता महीनदी ।
स्फाटिकेव शुभा सैषा काञ्चनैर्धातुभिर्वृता । आदित्येन समादत्ता रश्मितेजोऽभिसंभवैः ।
मण्डलान्तर्गता देवी चक्षुषा नोपलभ्यते । रश्मिभिः पुनरुत्तीर्णा ततो योगेन धावति ।
आकाशगङ्गा संवृत्ता विपुलैरम्बुविग्रहैः । शीतच्छायैश्च तरुभिर्लताभिश्च सुगन्धिभिः । १२१००
पद्मषण्डैश्च विविधैः शुशुभे दिव्यगन्धिभिः । काञ्चनापीडजघना स्फाटिकान्तरमेखला ।
पद्मरेणुभिरापीता चक्रवाकावतंसिका । नीलगर्भसुकेशान्ता पुष्पसञ्चयसंकुला ।
शोभते विप्रसर्पन्ती प्रमदेव विभूषिता । सैषा गङ्गाफलं लेभे पुष्करेण समागता ।
सुतपाश्चन्द्रविहिता लोकानां धारणे रता । सरस्वती स्वरैर्व्यक्तमधीते ब्रह्मवादिनी ।
पृष्ठात्प्रयाता शैलेन्द्रे मन्दरे मन्दगामिनी । ऋग्मयांश्चतुरो वेदान् पादैश्चतुर्भिरावृतान् । १२१०५
यजुर्भिः सामभिश्चैव ग्रथिताञ्छ्रक्षया तथा । ऋषिभिर्ज्वलनप्रख्यैस्तपसा दग्धकिल्बिषैः ।
सुपार्श्वस्य गिरेः पादैः परिदायैः सुपारणैः । निखनन् सर्व्वभूतानि नियमेन च शृण्वते ।
मन्दराग्रे विपर्य्यन्तं जगत्कृत्स्नमतीन्द्रियं । विरामनियमे प्राप्ते तूष्णीम्भूता बभूव ह ।
न वाचमीरयेद्देवी नियामत् सत्यवादिनी । अथ भूतानि सर्व्वाणि तूष्णींभूतानि सर्व्वशः ।
न शेकुरभिधानार्थं व्याहर्त्तुं वदनैर्बलात् । विभज्य योगं मनसा सर्व्वभूतेष्वनुग्रहं । १२११०
सरस्वती स्वरयुता व्याजहार महास्वनं । सरस्वत्या समायुक्तां गिरं वदन्ति देहिनः ।

अस्मिन्नेवाथ ते सर्व्वे गानं गायन्ति स्त्रियया । आदित्या वसवो रुद्रा मरुतश्चाश्विभिः सह ।
जटिलाश्चीरवसना मुञ्जमेखलधारिणः । गन्धर्व्वाः किन्नराश्चैव सनागाः सह चाप्सरः ।
तपश्चरन्ति सहिताः पुष्करेषु मनीषिणः । अपि कीटपतङ्गैश्च सह सर्व्वैः सरीसृपैः ।
शोषयन्ति शरीराणि तपसोग्रेण यत्नतः । विष्णुर्जिष्णुत्वमापन्नो देहान्तरविसृष्टवान् । ११११५
संरजति महायोगो सर्व्वांस्तान् सहचारिणः । पुष्करे रमते विष्णुः पुनरेव द्विधाकृतः ।
दीप्यमानः स्वतेजोभिर्विधूम इव पावकः । सोऽग्निर्मनःसमुद्भूतः पृथिवीं तापयन्निव ।
प्रधावति समं तेन मण्डलं दशयोजनं । विरराजार्च्चिभिर्दीप्तैः शतशश्चावलम्बिभिः ।
विशीर्णपार्श्वविभवैर्म्मयूखैरिव दीपितः । तस्याग्नेर्व्विस्फुलिङ्गानां न शेकुर्व्वारणे रताः ।
विप्रकीर्णस्य वासुधानर्थाद्दामिव भास्करः । सोऽग्निर्दीप्यति सर्व्वांशुर्विधूम इव पावकः । १११२०
स्वलिङ्गिभिर्ज्ज्वलनप्रख्यैर्व्विकृतो वा महाध्वरे । सोऽग्निर्धूमगतस्तत्र तिष्ठते विपुलस्तदा ।
यावद्विष्णुः क्रमप्राप्तो नियमस्य समापनात् । रक्षां कृत्वा न तं विद्या विष्णुर्व्विष्णुपराक्रमः ।
भूत्वा शतशरीरो वै नागो बालाहकोऽभवत् । तमग्निमात्मसंसृष्टं लोलिहानं महामतिः ।
प्रतिप्रवृद्धं तेजोभिर्भूतानां हितकाम्यया । वारिणा सुखशीतेन प्राणिनां प्राणवर्द्धनः ।
न्यषिञ्चद्दहनं तत्र नागो बालाहकस्तदा । ततः सिद्धगणैर्ज्जुष्टः पुष्करे तप्यते तपः । १११२५
संहृत्य मनसात्मानं महायोगी महाबलः । संहृत्य पादगात्राणि मनो मूर्द्ध्नि विधारयन् ।
अचलं स्थानमासाद्य तूष्णीम्भूतो बभूव ह । एष धर्म्मो हि धर्म्माणां योगधानविकल्पितः ।
हितः सर्व्वेषु भूतेषु इह चामुत्र चोभयोः । अथ दैत्या हतास्तत्र समागम्योद्यतायुधाः ।
मायाप्राप्तैर्ब्बहुविधैर्न्नगरैरभिसंहताः । अग्निं दैत्याः पर्व्वताग्रैरभिघ्नन्ति परन्तप ।
ज्वलन्तं ज्वलनप्रख्या महाकाया महाबलाः । मेघीभूताश्च मायाभिर्व्वर्षन्ति बलदर्पिताः । १११३०
तस्मिन्नेवाग्निसंघाते संघातं तं महाबलाः । ते शैलास्तर्व्विषा दग्धाः शतशोऽथ सहस्रशः ।
युगान्ते प्रभुरादित्यो जनानिव दिधक्षति । न शेकुरग्निं दैत्यास्ते मायाभिमुखमुद्यतं ।
आदित्यमिव दीप्यन्तं नभः सूर्य्योदये यथा । विहतैरुद्यमैः सर्व्वैर्दैत्या भग्नपराक्रमाः ।
गन्धमादनमासाद्य निषण्णा नगमूर्द्धनि । स चाग्निर्व्वैष्णवैर्ल्लोकैर्व्विशुद्धिः सह सङ्गतः ।
अन्तरीक्षचरान्दैत्यान्निर्द्दहन् विचरन्दिवि । नागो बालाहकश्चैव मेघैः संघातमागतः । १११३५
मुमोच सलिलं भूमौ पर्ज्जन्य इव वृष्टिमान् । मन्त्रैः सञ्चोदितो नागो द्विजेभ्यो वदनोद्गतैः ।
मुमोच तोयसंघातं मानयन्विप्रजं जलं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भवष्यपर्व्वणि पौष्करे अष्टादशाधिकद्विशततोऽध्यायः ॥ २१८ ॥
॥ जनमेजय उवाच ॥ संयुक्ष्य तपसा देवाः किं कुर्व्वन्त ततः परं । न हि तद्विद्यते लोके तपसा यन्न लभ्यते ।
॥ वैशम्पायन उवाच ॥ अथ दीक्षां समास्थाय सर्व्वे विष्णुमया गणाः । पुष्करादग्निमुद्धृत्य प्रणीय च यथाविधि ।
जुहुवुर्म्मन्त्रविधिना ब्राह्मणा मन्त्रचोदिताः । हविषा मन्त्रपूतेन यथा वै विधिरेव च । १११४०

स चाग्निर्व्विधिवत्तच वर्द्धते ब्रह्मतेजसा । तेजोभिर्व्विकृतीभूतः प्रभुः प्रत्तषविग्रहः ।
ब्रह्मदण्ड इति ख्यातो वपुषा निर्द्दहन्निव । दिव्यरूपप्रहरणो ह्यसिचर्म्मधनुर्द्धरः ।
सगदो लाङ्गली चक्री शरी चर्म्मी परश्वधी । शूली वज्री खड्गपाणिः शक्तिमान् वरकार्मुकी ।
विष्णुश्चक्रधरः खड्गी मुषली लाङ्गलायुधः । नरो लाङ्गलमालम्ब्य मुषलञ्च महाबलः ।
वज्रमिन्द्रस्तपोयोगाच्छतपर्व्वाणमाक्षिपत् । रुद्रः शूलं पिनाकञ्च मनसा धारयन् प्रभुः । ११२७५
मृत्युर्द्दण्डं सपाशञ्च कालः शक्तिमग्टह्णत । जग्राह परशुं त्वष्टा कुवेरस्य परश्वधं ।
निर्व्विकारैः समायुक्ताः शतशोऽथ सहस्रशः । विश्वकर्म्मा च त्वष्टा च चक्राते ह्यायुधं बहु ।
इन्द्रायाग्नीरथं प्रादात् सूर्य्याय च प्रतापिने । परमात्मा ददौ विष्णुरुद्राय च महात्मने ।
छन्दोमिरेव त्वष्टा च स चकाराथ वाहिनीं । विश्वकर्म्मा विमानानि चकार बहुभिः क्रमैः ।
शरीरांशं समुद्धृत्य विष्णुः सत्यपराक्रमः । पुष्करात् पर्व्वणि घनात् पृतनार्थं प्रवर्त्तयत् । ११२८०
चाश्चैव सूर्य्यचक्राणां त्वरया समकल्पयत् । ययाऽभियुज्य संग्रामे शत्रुं निर्व्विभिदे रणे ।
स तं दण्डं समुचितं निर्व्विकारं समाहितं । ब्रह्मा जग्राह विधिना अन्तर्द्धानगतः प्रभुः ।
स्वैः प्रभावैश्च विधिना सोऽस्त्रग्राममञ्चतुर्व्विधं । ऐन्द्रमाग्नेयवायव्यं रौद्रं रौद्रेण वर्च्चसा ।
एभिर्व्विकारैः संयुक्ता दितेः पुत्त्रा महाबलाः । तपसा श्रियया चैव अस्त्रैः प्रहरणैरपि ।
बलेन चतुरङ्गेण वीर्य्येण सुसमाहिताः । अप्रधृष्या रणे सर्व्वे क्षणेनैवाभवंस्तदा । ११२८५
ते विहाय गुहामध्ये सभाण्डोपस्करे रये । मन्दरस्य गिरेः पादे विचेरुर्व्वसुधातले ।
चतुरङ्गं बलं सर्व्वं संहृत्य तपसः प्रभुः । विष्णुरेव महायोगी चचार वसुधातले ।
भूयोऽन्यत्तप आसेदुस्तरन्तो ब्राह्मणैः सह । तैश्च सर्व्वैः सुरगणैश्चर्म्मचीरनिवासिभिः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे ऊनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१८ ॥
॥ जनमेजय उवाच ॥ वर्त्तमाने खिले ब्रह्मन्निर्म्मर्य्यादे महाग्रहे । अविनाशे च भूतानां कथमासन् प्रजास्तदा ।
॥ वैशम्पायन उवाच ॥ पृथुं वैण्यं प्रजापालमभ्यषिञ्चत् प्रजापतिः । राज्याय ऋषिभिः सार्द्धं प्रजा धर्म्मपरायणः । ११२८०
एष नः परमो राजा सानुरागो व्यजायत । त्रेतायां संप्रवृत्तायामन्योन्यमनुजल्पिरे ।
एष नो वृत्तिदाता च शिल्पानाञ्च समर्पिता । निर्म्माता सर्व्वभूतानां सत्यप्राप्तेन कर्म्मणा ।
एतस्मिन्नन्तरे देवा गन्धमादनसानुषु । बहुभिर्नियमैः श्रान्ता निषण्णा गिरिसानुषु ।
अथ गन्धं समासाद्य समन्ताद्देवदानवाः । माधवे समये प्राप्ते तेन गन्धेन दर्पिताः ।
पुष्पमात्रस्य यद्वीर्य्यं मारुतेन विसर्पितं । मनोग्राहि सुखं सर्व्वं पार्थिवं गन्धमुत्तमं । ११२९५
ते दैत्यास्तेन गन्धेन किञ्चिद्विस्मयमागताः । प्रसन्नमनसो भूत्वा परं सौख्यमुपागताः ।
ऊचुश्च सहिताः सर्व्वे तेन गन्धेन दर्पिताः । पुष्पमात्रस्य यद्वीर्य्यं किं तस्य फलतो भवेत् ।
अनुमानेन विज्ञेया विविधाः कर्म्मबुद्धयः । शुभाश्चैवाशुभाश्चैव बुद्धिप्राणेन देहिनां ।
तस्मादयं पयोमध्ये ओषधीर्निर्म्मयामहे । मन्दरेण विशालेन बलिना कामरूपिणा ।

समुद्रमभिसंरभ्य मथ्नीमः सोमजं जलं। पीत्वा च सहिताः सर्व्वे प्रस्थिताः कामरूपिणः। ११९७०
विष्णुरेवायणोस्तेषां भविष्यति महाबलः। दिवश्च वसुधाश्चैव भोक्ष्यामः सह शत्रुभिः।
समूलपत्रशाखाश्च सपुष्पाः सफलाशिनः। सर्व्वगृहांश्च गृहोमो वसुधां वसुधातले।
उद्धृत्य गिरिपादेभ्यो गन्धमादनसानुजान्। प्रभाष्य वचनं दैत्या मन्दरस्य प्रकम्पने।
समुद्धर्त्तुं प्रधावन्तः कम्पयन्ति स्म मेदिनीं। निश्चयेन महावीर्य्या बाहुभिः परिणाहिभिः।
न शेकुस्ते समुद्धर्त्तुं शैलेन्द्रं दनुवंशजाः। निपेतुर्जानुभिर्धृष्टा विपुले पर्व्वतान्तरे। ११९७५
समाधायात्मनात्मानं तपसा दग्धकिल्विषाः। पितामहं प्रपद्यन्त शिरोभिः कामरूपिणः।
तेषां मनोऽभिलषितं ब्रह्मा सर्व्वगो वशी। ज्ञात्वा बहुविधैर्व्वाक्यैर्व्याजहार सरस्वतीं।
अशरीरां शरीरस्थः परया वर्णसम्पदा। सर्व्वलोकपतिर्ब्रह्मा लोकानां हितकाम्यया।
आदित्यैर्व्वसुभिश्चैव रुद्रैश्च समरुद्गणैः। देवैर्यक्षैः सगन्धर्व्वैः किन्नरैश्च प्रगायिभिः।
समेत्य सहितैः सर्व्वैरुद्धर्त्तुं शक्यते गिरिः। अमृतार्थे महातेजा धातुभिः समरञ्जितः। ११९८०
सुरासुरगणाः सर्व्वे समुत्पाट्य महागिरिं। हस्तारूढाः प्रपश्यन्ति वीरुधो हि नवं रसं।
एतच्छ्रुत्वा तु वचनं सर्व्वेषामन्तिके तदा। दैतेया बाहुबलिनो मनोभिर्वाग्भिरेव च।
विक्षोभभूता बहुधा बभूवुर्लवणाम्भसः। यत्र पुष्करविन्यस्तं सहितैर्द्देवदानवैः।
सुरासुरगणाः सर्व्वे सहिता लवणाम्भसः। मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च।
समाः सहस्रं मथितं जलमोषधिभिः सह। क्षीरभूतं समायोगादमृतं समपद्यत। ११९८५
तच्चक्रुरसुराः पूर्व्वमाक्रान्ता लोभमन्युना। तदा पश्चाच्चक्रुर्द्देवाः कामतेजोबलान्विताः।
धन्वन्तरिस्तथा मद्यं श्रीर्द्देवी कौस्तुभो मणिः। शशाङ्को विमलश्चापि समुत्तस्थुः समन्ततः।
उच्चैःश्रवा हयो रम्यः पीयूषं तदनन्तरं। पश्चाद्देवास्तदा पातुमुद्यता राहुमब्रुवन्।
न च केचित् पिवन्त्वन्ये दैत्या नैव च दानवाः। चिच्छेदाथ हरिः सङ्ख्ये राहोश्चक्रेण कं मृधे।
अभियुक्तं पितृगणैर्मुनिभिश्च सनातनैः। तदिन्द्रहस्तादमृतं जहार पृथिवी स्वयं। ११९९०
जगामान्तर्गता देवी ब्रह्मवाक्यप्रचोदिता।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे विंशत्यधिकद्विशतोऽध्यायः॥ २२०॥
॥ जनमेजय उवाच। निहते दैत्यसंघाते विष्णोश्चातिपराक्रमे। दैतेया दानवेयाश्च किमिच्छन्ति पराक्रमात्।
॥ वैशम्पायन उवाच॥ दानवा राज्यमिच्छन्ति पराक्रम्य महाबलाः। तप इच्छन्ति सहिता देवाः सत्यपराक्रमाः।
॥ जनमेजय उवाच॥ कथं कालस्य महतो हिरण्यकशिपुस्तदा, यजते ब्रह्मणः क्षेत्रे प्राप्तैश्वर्य्यः स कामदः।
॥ वैशम्पायन उवाच॥ यजेद्बहुसुवर्णेन राजसूयेन पार्थिवः। क्रतुना दानवश्रेष्ठो वसुधायां महाबलः। ११९९५
गङ्गायमुनयोर्म्मध्ये यदभूद्विपुलं तपः। समेयुस्तत्र सहिता यजमाने महासुरे।
ब्राह्मणा वेदविद्वांसो महाव्रतपरायणाः। यतयश्चापरे सिद्धा योगधर्म्मेण भारत।
मुनयो वालिखिल्याश्च नानाधर्म्मेण शोषिताः। बहवो हि द्विजा मुख्या नित्यं धर्म्मपरायणाः।

स्थयस्य महाभागा विप्रैः पूज्याः सहस्रशः । विपुले रत्नविभवे ह्रियमाण इतस्ततः ।
शुक्रस्तु सह पुत्रेण दैत्यं याजयते प्रभुः । हिरण्यकशिपुं मध्ये गणानां ज्वलनप्रभः । १२२००
हिरण्यकशिपुश्चैव व्याजहार सरस्वतीं । कामादरं ददामीति तद्वै सम्प्रतिपद्यतां ।
विष्णुर्व्वामनरूपेण भिचां तां प्रतिगृह्णाति । हिरण्यकशिपोर्हस्ताद्द्वे पदे पदमेव च ।
ततः क्रमितुमारेभे विष्णुः सत्यपराक्रमः । चीन् लोकांस्त्रिपदैः क्रान्त्वैद्दिव्यं वपुरधारयत् ।
हृतराज्याश्च दैतेयाः पातालविवरं ययुः । ससैन्यगणसन्नद्धाः सप्रासाः सासितोमराः ।
सयन्त्रलगुडाश्चैव सपताकरथध्वजाः । सचर्म्मवर्म्मकोषाश्च सायुधाः सपरश्वधाः । १२२०५
तथेन्द्रं विष्णुसहिताः सद्यस्तेऽभ्युत्थिता गणाः । अभ्यर्षिञ्चन् प्रमुदिता लोकानामधिपं सुराः ।
स तान् स्वधामृतेनाशु पितॄन् वै समतर्पयत् । ब्रह्मा तदमृतं दिव्यं महेन्द्राय प्रयच्छति ।
अव्ययस्याव्ययस्यैव संवृत्तस्तेन कर्म्मणा । ततः शङ्खमुपाध्मासीत् द्विषतां लोमहर्षणं ।
पितामहकरोद्भूतं जनित्रे प्रथमे पदे । तं श्रुत्वा शङ्खशब्दन्तु चयो लोकाः समाहिताः ।
निर्वृतिं परमां प्राप्ता इन्द्रं नाथमवाप्य च । सर्व्वैः प्रहरणैश्चैव संयुक्ता वह्निसम्भवैः । १२२१०
मन्दराग्रे सुविहितैर्ज्वलद्भिरिव पावकैः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे एकविंशत्यधिकद्विशतोऽध्यायः ॥ २२१ ॥

॥ वैशम्पायन उवाच ॥ ततो महति वृत्तान्ते स्थिते राज्ये महोदये । देवानां मानुषाणाञ्च सहवासोऽभवत्तदा ।
एकतः समधीयन्त संहिताः प्रवदन्ति च । स्वयञ्च भागं गृह्णन्ति यज्ञकर्म्मणि भारत ।
प्राचेतसं ततो दचं दीचित्वा वै बृहस्पतिः । वाजिमेधाय भगवानृषिभिः परिवारितः ।
तस्मिन्मातामहे यज्ञे दचस्य विदितात्मनः । आमिचमकरोद्रुद्रो भागार्थं सह नन्दिना । १२२१५
रुद्रस्यैव हि तद्रूपं द्विधाभूतं तदीप्सया । जातः परमधर्म्मात्मा नन्दी पुरुषविग्रहः ।
तेन योगेन राजेन्द्र यत्तद्ब्रह्म सनातनं । विहितं सत्यवचनैस्तेनैव परमात्मना ।
स्वरूपैश्चाप्यरूपैश्च विरूपाचैर्घटोदरैः । ऊर्द्ध्वनेत्रैर्म्महाकायैर्व्विकटैर्व्वामनैस्तथा ।
शिखिभिर्जटिभिश्चैव व्यचैश्च शङ्कुकर्णिभिः । चीरिभिश्चर्म्मिभिश्चैव कूटमुद्गरपाणिभिः ।
सघण्टाचीरिभिश्चैव मुञ्जमेखलधारिभिः । सहस्तकटकैश्चैव स्वर्णकुण्डलधारिभिः । १२२२०
सडिण्डिमैः सभेरीकैः समृदङ्गैः सवेणुभिः । एतैः परिवृतो देवो मखं तं समुपाव्रजत् ।
सशङ्खमुरजैश्चापि सतालतलपाणिभिः । उग्रायुधधरो देवः सपिनाक इवान्तकः ।
विरराजार्च्चिभिर्दीप्तैर्मखे मखवतां वरः । कालाग्निरिव दीप्तार्च्चिर्जगद्दग्धुमिवोद्यतः ।
नन्दी पिनाकपाणिश्च जघ्नतुर्म्मखमुत्तमं । युगान्त इव कालाग्निः चिप्रं दग्धुमिवोद्यतः ।
यूपमुत्क्षिप्य धावन्ति निशाचरगणास्ततः । चासयन्मुनिसंघांश्च चीरचर्म्मनिवासिनः । १२२२५
हवींष्यन्ये पिबन्त्येवं जिह्वाभिस्ताम्रलोचनाः । भचयन्ति पशूनन्ये रसनाग्रैः प्रलम्बिभिः ।
मुमुचुश्चापरे यूपान् प्रसभं प्रहरन्ति च । वह्निमन्ये प्रसिञ्चन्ति वारिभिः प्रहसन्ति च ।

सोममन्ये जहुः केचिद्वैश्वानरावोपमैः । दर्भान् केचित् प्रलुम्पन्ति हस्तैः पद्मदलप्रभैः ।
बभञ्जिरे च यूपाग्रान् कलशांश्चैव चिक्षिपुः । चिच्छिदुः काञ्चनान् वृक्षान् शोभार्थं संप्रकल्पितान् ।
विभिदुश्चैव वार्णेश्च मुमुचुश्च हिरण्मयान् । लुलुपुश्चैव पात्राणि ममन्थुश्चारणीमथ । १२१३०
चरुंश्चैव प्राश्नंश्च लुलुपुश्च समाहिताः । चखादिरे पुरोडाशान्सखार्थैश्चावकर्त्तिरे ।
एवं दिवा च रात्रौ च भिद्यमानो महामखः । चुक्रोश च महानादं भिद्यमान इवार्णवः ।
धनुः शरमादाय पूर्व्वदत्तं स्वयम्भुवा । कृतं कीचकवेणुभ्यां समरेषु महाबलं ।
प्रतिगृह्य महादेवः स शरैः समयोजयत् । धनुर्विसृज्य बाहुभ्यां जघान सुमहाक्रतुं ।
स विद्धस्तेन वाणेन खं समुत्पतितः क्रतुः । मृगो भूत्वा गर्ह्यमाणो ब्रह्माणमुपधावति । १२१३५
शरेणाभिहतस्त्राणं न लेभे शरणं भुवि । शरणार्थी स्वयं प्राप्तः शरेणान्तर्गतेन च ।
तमुवाच मृगं ब्रह्मा शुभं सानुनयं वचः । स्वरेणोत्तमवीर्य्येण गम्भीरेण सुभाषिणा ।
एवंरूपो नभसि त्वं भविष्यसि महामृग । विजितश्च त्रिपर्व्वेण शरेणानतपर्व्वणा ।
तिष्ठ नक्षत्रैरपि सह रुद्रेण नित्यशः । सोमेन सह संयुक्तो ह्यव्ययेणाव्ययेन च ।
दिवि सञ्चारभूताभिस्ताराभिः सह सङ्गतः । ज्योतिषां ज्योतिर्भूतस्त्वं ध्रुवस्त्वं शाश्वतो भव । १२१४०
यच्चैतद्रुधिरं दिव्यं क्षतात् सर्म्मनिःसृतं । नभस्युत्पतितश्चैव प्रवेगेण प्रधावतः ।
क्षतजं बहुवर्णञ्च केतुनक्षत्रसंस्थितं । निमित्तभूतं भूतानां वर्षे वर्षप्रदं तथा ।
सुखं दुःखञ्च भूतानां दर्शनात् संप्रवर्त्तते । इन्द्रियश्रवणाच्चैव नभसीन्द्रायुधोऽभवत् ।
चक्षुषी मानुषे राजन् विस्मयात् समवेक्षतां । अद्भुतं बहुचित्रञ्च मनसा संप्रकल्पितं ।
न तु रात्रौ प्रदृश्येत खे तु सम्रणसंश्रितं । दिनस्यैव सदा लग्ने महत् कार्य्यं प्रदृश्यते । १२१४५
भूमावेव समुत्तिष्ठेदाकाशे प्रविलीयते । शतशश्च समं सर्व्वे प्रधावन्ति प्रचेतसः ।
भयाद्रुद्रस्य महतो धन्विनो वाणपाणयः । नन्दी रुद्रगणैः सार्द्धं पिनाकी समतिष्ठत ।
युगान्तकाले ज्वलितो ब्रह्मदण्ड इवोद्यतः । विष्णुः शृङ्गात्समुद्भूतं प्रगृह्य विपुलं धनुः ।
प्रातिष्ठत महाबाहुः पाणिना चक्रमादधत् । गदां सघण्टामन्येन खड्गमन्येन पाणिना ।
प्रगृह्य सोऽग्रतोऽतिष्ठद्रुद्रायोद्यतपाणये । ततः शृङ्गात्समुद्भूतं प्रगृह्य विपुलं धनुः । १२१५०
शङ्कुश्चाप्रतिमं लोके शरांश्चानतपर्व्वणः । विष्णुरग्रे स्थितो भाति सबलः संहताञ्जलिः ।
बद्धगोधाङ्गुलित्राणः सचन्द्र इव तोयदः । आदित्या वसवश्चैव दिव्यैः प्रहरणैः सह ।
विष्णुमेवाभितः सर्व्वे अतिष्ठन् ज्वलनप्रभाः । मरुतश्चैव विश्वे च रुद्रनेत्राभिपद्यत ।
गन्धर्व्वाः किन्नराश्चैव नागा यक्षाः सपन्नगाः । ऋषयो न्यस्तदण्डाश्च उभयोः पक्षयोर्हिताः ।
जपन्ति शान्तये नित्यं लोकानां हितकाम्यया । रुद्रः शरेणाभ्यहनद्विष्णुमेवाग्रणी रणे । १२१५५
यदि सर्व्वाङ्गसन्धीषु तीक्ष्णाग्रेण च पत्रिणा । न चकम्पे तदा विष्णुः सर्व्वात्मा ब्रह्मसंभवः ।
न च रोषमना देवं हतं विभ्रत् षडिन्द्रियैः । विष्णुश्च धनुरादाय शरेण समयोजयत ।

